# ভাষা-পরিচ্ছেদঃ

কলিকাতা-বিশ্ববিদ্যালয়-

দর্শনশাস্ত্রাধ্যাপক-

শ্রীমৎ-পঞ্চানন-ভট্টাচার্য্য-শাস্ত্রি-

কৃত-

মুক্তাবলী-সংগ্রহ-

নামধেয়-মুক্তাবলীব্যাখ্যা-

সম্বলিত

ন্যায়-সিদ্ধান্ত-মুক্তাবলী-

টীকা-সহিতঃ

তৃতীয়-সংস্করণে

শ্রীমৎ-পঞ্চানন-ভট্টাচার্য্য-শাস্ত্রিণা

বিবৃতোঽনূদিতঃ

সম্পাদিতশ্চ

মূল্যম্ ১০্ দশ-রূপ্যকম্

# ग्रन्थावतरणिका

महर्षि-गौतम-मुनिप्रणीतं पञ्चाध्यायात्मकं न्यायदर्शनं सर्वेषां जीवभूतां सर्वविद्योपकाराय सर्व-कर्मोपकाराय सर्वधर्मोपकाराय प्रज्ञा-वाक्य-क्रिया-वैशद्याय च प्रवृत्तम्। तथा चाहुस्तद्भाष्यकाराः—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता॥

विष्णुगुप्तापरनामधेयेन चाणक्येनापि स्वीयेऽर्थशास्त्रे विनयाधिकारिके विद्यासमुद्देशे उक्तम्—"धर्माधर्मौ त्रय्याम्, अर्थानर्थौ वार्त्तायाम्, नयानयौ दण्डनीत्यां, बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञा-वाक्य-क्रिया-वैशारद्यञ्च करोती"ति।

तस्यैतस्य न्यायदर्शनस्य प्रमाणप्रमेय-पदार्थमधिकृत्य प्रवृत्तोऽयं **भाषापरिच्छेदः।** अत्र च महर्षि-कणादप्रोक्तानां द्रव्यादि-सप्तपदार्थानां गौतमप्रोक्तानाञ्च प्रत्यक्षादीनां प्रमाणानां नव्यरीत्या परीक्षा परि-दृश्यते। तेन केचिद् ग्रन्थमिमं वैशेषिकशास्त्रीयं मन्यन्ते; तदयुक्तम्। न ह्येतद् वैशेषिक-शास्त्रम, किन्तु न्यायशास्त्रमेव। न हि द्रव्यादि-पदार्थपरीक्षामात्रेण वैशेषिकशास्त्रत्वम, नैयायिकैरपि द्रव्याद्य-भ्युपगमात्। तथा च न्यायभाष्यम्—"अस्त्यन्यदपि द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाः प्रमेयम, तद्भेदेन चापरिसंख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुप-दिष्टं विशेषेणेति। किञ्च यद्येतद् द्रव्यादिपरीक्षया वैशेषिकशास्त्रं स्यात्, प्रमाणपरीक्षया कथमेतेन न्यायशास्त्रं न भवेत्? विनिगमकाभावात्। तस्माद् वैशेषिकाभिमत-प्रमाणानभ्युपगमान्नैयायिकाभिमत-प्रमाणप्रमेयाभ्युपगमाच्चास्य न्यायशास्त्रत्वमिति सुधीभिर्विभावनीयम्।

अस्य च प्रणेता वासुदेव-सार्वभौम-वंशावतंसो रत्नाकर-विद्यावाचस्पतिपौत्रः काशीनाथविद्या-निवासात्मजः श्रीमद् विश्वनाथ-न्यायपञ्चानन इति पण्डितप्रसिद्धिः। परन्त्वत्र प्रख्याति-गवेषकानां प्राप्त-रवीन्द्र-पुरस्काराणां नानैतिहासिक-ग्रन्थरचयितॄणां विशिष्टाध्यापकानां श्रीमद्दीनेशचन्द्र भट्टा-चार्यमहोदयानां मतान्तरं परिलक्ष्यते। तैर्मन्यते—नायं ग्रन्थो विश्वनाथ-न्यायपञ्चाननेन रचितोऽपि तु कृष्णदास-सार्वभौमेनेति। प्रमाणपञ्चकेन चैतेऽर्थमिमं प्रतिष्ठापयन्ति। तानि च (१) कतिचिद् हस्तलिखितपुस्तकेषु कृष्णदास-सार्वभौमनामोल्लेखः (२) विश्वनाथन्यायपञ्चाननात् पूर्वं मुक्तावल्युल्लास-नामधेय-मुक्तावलीविवरणरचना (३) विश्वनाथ-न्यायपञ्चानन-समकालीन-रुद्रतर्कवागीश-विरचितं रौद्रीनामधेयं तद्विवरणान्तरं, (४) गौतमसूत्रवृत्तावुपमानप्रमाणोदाहरणान्तरोल्लेखः (५) मैथिलाक्षर-लिखित-मुक्तावली-प्रतिलिपिलेखकाले पञ्चाधिक-द्विशत-देशीय-शकात्मकश्चेति। तद्वक्तव्यप्रपञ्चस्तु **वंगे नव्यन्यायचर्चा**-नामधेये निबन्धे द्रष्टव्यः।

न चैतानि प्रमाणानि तन्मतं प्रतिष्ठापयितुमर्हन्ति, विचारासहत्वात्। तत्राद्यं तावन्न युक्तम्। न हि कतिचिद्धस्तलिखित-पुस्तकेषु कृष्णदास-सार्वभौमोल्लेखस्तत्र प्रमाणं भवितमर्हति। कृष्णदास-

सार्वभौममांमोट्टङ्कितपुस्तकेष्वपि संशोधनदर्शनात्, बहुषु हस्तलिखित-पुस्तकेषु भारतीय-नानाप्रान्त-स्थितेषु विश्वनाथनामोल्लेख-दर्शनात्, तद्रचितत्वे विदुषां विवादादर्शनाच्च। न तावद् द्वितीयं, मुक्तावल्युल्लासस्य विश्वनाथन्यायपञ्चाननात् प्राग् रचितत्वे प्रमाणाभावात्, तैरपि तत्र प्रमाणाप्रदर्शनात्, उल्लासकारस्य विश्वनाथस्य सम्यक् परिचयाभावात् तस्य विश्वनाथन्यायपञ्चाननादन्यत्वावार्चीनत्वयोरपि सम्भवाच्च। न तावत् तृतीयम्, विश्वनाथन्यायपञ्चानन-समकालीनस्य रौद्रीटीकाकर्त्तृरुद्रतर्कवागीशस्योपटीकाकर्त्तृत्वसम्भवात्। न हि समकालीनयोर्द्वयोष्टीकोपटीका-कर्त्तृत्वाभावे किञ्चिन्नियामकमस्ति, समकालीनस्यापि टीकाकर्त्तृत्वदर्शनात्, उल्लासधृतपाठ-रौद्री-धृतपाठभेदस्य तत्राप्रमाणत्वात्, उल्लासात् प्राक् मुक्तावलीव्याख्यानसत्त्वे प्रमाणाप्रदर्शनात्, न्याय-सूत्रवृत्ति-रचनात् शतवर्षेभ्यः पूर्वं मुक्तावलीरचनायां प्रमाणाप्रदर्शनाच्च। नापि चतुर्थम्, न्यायसूत्रवृत्तावुपमान-प्रमाणोदाहरणाद् मुक्तावल्यां तदुदाहरणान्यत्वस्य तत्राप्रमाणत्वात्। न हि ग्रन्थयोरुदाहरणभेदो ग्रन्थकर्त्तुरन्यत्वमावहति, ग्रन्थयोरुदाहरणभेदेऽपि तत्कर्त्तुरेकत्वसम्भवात्। नापि पञ्चमम्, मैथिलाक्षरलिखित-मुक्तावलीपुस्तकान्तिमभागस्थितस्य प्रतिलिपिकालबोधक-शकशब्दस्य मैथिलदेशीय-पारिभाषिकशकपरत्वसम्भवात्, तत्पुस्तक-प्रतिलिपिकालस्य षोड़शशाकाब्दीयतृतीयभागत्वे बाधकाभावात्, न्यायसूत्रवृत्ति-रचनासमकालस्य प्रतिलिपिकालत्वसम्भवात्। तस्माद् यावद् दृढतरप्रमाणं नायाति, तावद् विश्वनाथन्यायपञ्चाननस्यैतद्-ग्रन्थकर्त्तृत्वमुचितमिति बोध्यम्।

येषां किलास्मत्प्रातःस्मरणीयानां पुरुषधौरेयाणां सस्नेहोत्साहेनोपदेशेन वयं प्रोत्साहिता ग्रन्थ-व्याख्याने प्रवृत्तास्तेषामस्मदाचार्यचरणानामकालकालकबलितानां पूतया दृष्ट्या व्याख्यानमिदं सम्यङ् नैव पूतमिति सखेदं विनिवेदयामः। येषां किलादर्शचरितानामाशीर्वादानुकूल्येन बहुविघ्नोपहतमपि व्याख्यानमिदं समाप्तिमाप्तम्, तेषां किलास्मद्गुरुवर्याणां तथा सुहृद्वराणां कलिकाता-विश्वविद्यालयप्रधानदर्शनशास्त्राध्यापकानां श्रीमद्-**गोपीनाथ-भट्टाचार्य**-महोदयानां प्राड्विवाका-ग्रणीनामस्मत्प्राणप्रदानां श्रीमद्-**विनायकनाथ-वन्द्योपाध्याया**नां तथा प्रख्यातचिकित्सकानामस्मदेकान्तहितैषिणां श्रीमज्-**ज्योतिर्मय-वन्द्योपाध्याया**नामृणजातं जीवनशतेनापि नैव शोधनीयमिति सविनयं विनिवेदयामः।

ग्रन्थकर्त्तुर्मुद्रणशोधनं नैवोचितमिति जानतापि सहायरहितेन मया महतावधानेन मुद्रणशोधनं कृतम्। तथाप्यस्माकं दृष्टिदोषेण यन्त्राणां पेषणेण चानुस्वारविसर्गाणामुकारोकारैकारैकारषकारपकारादीनां वर्णानां न्यूनातिरेकजा अशुद्धिः संशोध्य निवेद्य चोपकुर्वन्तु सन्त इति साञ्जलिबन्धमर्थयते—

**यादवपुरविश्वविद्यालयतः**
१८८४ भाद्रपौर्णमास्याम्।

विदुषामनुचर-
**श्रीपञ्चानन भट्टाचार्यः**

# विषयानुक्रमणिका

# ॥ कारिकावली ॥

नूतन-जलधर-रुचये गोप-वधूटी-दुकूल-चौराय ।
तस्मै कृष्णाय नमः संसारमहीरुहस्य बीजाय ॥१

द्रव्यं गुणस्तथा कर्म सामान्यं सविशेषकम् ।
समवायस्तथाऽभावः पदार्थाः सप्त कीर्तिताः ॥२

क्षित्यप्तेजोमरुद्व्योम-काला दिग्देहिनौ मनः ।
द्रव्याण्यथ गुणा रूपं रसो गन्धस्ततः परम् ॥३

स्पर्शः संख्या परिमितिः पृथक्त्वं च ततः परम् ।
संयोगश्च विभागश्च परत्वं चापरत्वकम् ॥४

बुद्धिः सुखं दुःखमिच्छा द्वेषौ यत्नो गुरुत्वकम् ।
द्रवत्वं स्नेहसंस्कारावदृष्टं शब्द एव च ॥५

उत्क्षेपणं ततोऽवक्षेपणमाकुञ्चनं तथा ।
प्रसारणं च गमनं कर्माण्येतानि पञ्च च ॥६

भ्रमणं रेचनं स्यन्दनोर्ध्वज्वलनमेव च ।
निर्यग्गमनमप्यत्र गमनादेव लभ्यते ॥७

सामान्यं द्विविधं प्रोक्तं परं चापरमेव च ।
द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते ॥८

परभिन्ना तु या जातिः सैवापरतयोच्यते ।
द्रव्यत्वादिकजातिस्तु परापरतयोच्यते ॥९

व्यापकत्वात्परापि स्याद् व्याप्यत्वादपरापि च ।
अन्त्यो नित्यद्रव्यवृत्तिर्विशेषः परिकीर्तितः ॥१०

घटादीनां कपालादौ द्रव्येषु गुणकर्मणोः ।
तेषु जातेश्च संबन्धः समवायः प्रकीर्तितः ॥११

अभावस्तु द्विधा संसर्गान्योन्याभावभेदतः ।
प्रागभावस्तथा ध्वंसोऽप्यत्यन्ताभाव एव च ॥१२

एवं त्रैविध्यमापन्नः संसर्गाभाव इष्यते ।
सप्तानामपि साधर्म्यं ज्ञेयत्वादिकमुच्यते ॥१३

द्रव्यादयः पञ्च भावा अनेके समवायिनः ।
सत्तावन्तस्त्रयस्त्वाद्या गुणादिर्निर्गुणक्रियः ॥१

सामान्यपरिहीनास्तु सर्वे जात्यादयो मताः ।
पारिमाण्डल्यभिन्नानां कारणत्वमुदाहृतम् ॥१५
अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता ।
कारणत्वं भवेत् तस्य त्रैविध्यं परिकीर्तितम् ॥१६
समवायिकारणत्वं ज्ञेयमथाप्यसमवायिहेतुत्वम् ।
एवं न्यायनयज्ञैस्तृतीयमुक्तं निमित्तहेतुत्वम् ॥१७
यत्समवेतं कार्यं भवति ज्ञेयं तु समवायिजनकं तत् ।
तत्रासन्नं जनकं द्वितीयमाभ्यां परं तृतीयं स्यात् ॥१८
येन सह पूर्वभावः कारणमादाय वा यस्य ।
अन्यं प्रति पूर्वभावे ज्ञाते यत्पूर्वभावविज्ञानम् ॥१९
जनकं प्रति पूर्ववर्त्तितामपरिज्ञाय न यस्य गृह्यते ।
अतिरिक्तमथापि यद्भवेन्नियतावश्यकपूर्वभाविनः ॥२०
एते पञ्चान्यथासिद्धा दण्डत्वादिकमादिमम् ।
घटादौ दण्डरूपादि द्वितीयमपि दर्शितम् ॥२१
तृतीयं तु भवेद् व्योम कुलालजनकोऽपरः ।
पञ्चमो रासभादिः स्यादेतेष्वावश्यकस्त्वसौ ॥२२
समवायिकारणत्वं द्रव्यस्यैवेति विज्ञेयम् ।
गुणकर्ममात्रवृत्ति ज्ञेयमथाप्यसमवायिहेतुत्वम् ॥२३
अन्यत्र नित्यद्रव्येभ्य आश्रितत्वमिहोच्यते ।
क्षित्यादीनां नवानां तु द्रव्यत्व-गुणयोगिता ॥२४
क्षितिर्जलं तथा तेजः पवनो मन एव च ।
परापरत्वमूर्तत्वक्रियावेगाश्रया अमी ॥२५
कालखात्मदिशां सर्वगतत्वं परमं महत् ।
क्षित्यादि पञ्च भूतानि चत्वारि स्पर्शवन्ति हि ॥२६
द्रव्यारम्भश्चतुर्षु स्यादथाकाशशरीरिणाम् ।
अव्याप्यवृत्तिः क्षणिको विशेषगुण इष्यते ॥२७
रूपद्रवत्वप्रत्यक्ष-योगि स्यात् प्रथमत्रिकम् ।
गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥२८

आत्मानो भूतवर्गाश्च विशेषगुण-योगिनः।
यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥२९

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः।
अष्टः स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥३०

स्पर्शादयोऽष्टौ वेगश्च गुरुत्वं च द्रवत्वकम्।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥३१

स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश।
बुद्ध्यादिषट्कं संख्यादि-पञ्चकं भावना तथा ॥३२

धर्माधर्मौ गुणा एत आत्मनः स्युश्चतुर्दश।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥३३

संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥३४

तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता।
षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥३५

स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीतपाकजः।
नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥३६

अनित्या तु तदन्या स्यात् सैवावयवयोगिनी।
सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा ॥३७

योनिजादिर्भवेद्देह इन्द्रियं घ्राणलक्षणम्।
विषयो द्व्यणुकादिश्च ब्रह्माण्डान्त उदाहृतः ॥३८

वर्णः शुक्लो रस-स्पर्शौ जले मधुर-शीतलौ।
स्नेहस्तत्र द्रवत्वं तु सांसिद्धिकमुदाहृतम् ॥३९

नित्यतादि प्रथमवत् किं तु देहमयोनिजम्।
इन्द्रियं रसनं सिन्धुर्हिमादिर्विषयो मतः ॥४०

उष्णस्पर्शस्तेजसस्तु स्याद्रूपं शुक्लभास्वरम्।
नैमित्तिकं द्रवत्वं तु नित्यतादि च पूर्ववत् ॥४१

इन्द्रियं नयनं वह्नि-स्वर्णादिर्विषयो मतः।
अपाकजोऽनुष्णाशीतः स्पर्शस्तु पवने मतः ॥४२

तिर्यग्गमनवानेष ज्ञेयः स्पर्शादि-लिङ्गकः ।
पूर्ववन्नित्यतायुक्तं देहव्यापि त्वगिन्द्रियम् ॥४३
प्राणादिस्तु महावायु-पर्यन्तो विषयो मतः ।
आकाशस्य तु विज्ञेयः शब्दो वैशेषिको गुणः ॥४४
इन्द्रियं तु भवेच्छ्रोत्रमेकः सन्नप्युपाधितः ।
जन्यानां जनकः कालो जगतामाश्रयो मतः ॥४५
परापरत्वधीहेतुः क्षणादिः स्यादुपाधितः ।
दूरान्तिकादिधीहेतुरेका नित्या दिगुच्यते ॥४६
उपाधिभेदादेकापि प्राच्यादिव्यपदेशभाक् ।
आत्मेन्द्रियाद्यधिष्ठाता करणं हि सकर्तृकम् ॥४७
शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ॥४८
मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत् ।
धर्माधर्माश्रयोऽध्यक्षो विशेषगुणयोगतः ॥४९
प्रवृत्त्याद्यनुमेयोऽयं रथगत्येव सारथिः ।
अहंकारस्याश्रयोऽयं मनोमात्रस्य गोचरः ॥५०
विभुर्बुद्ध्यादिगुणवान् बुद्धिस्तु द्विविधा मता ।
अनुभूतिः स्मृतिश्च स्यादनुभूतिश्चतुर्विधा ॥५१
प्रत्यक्षमप्यनुमितिस्तथोपमितिशब्दजे ।
घ्राणजादिप्रभेदेन प्रत्यक्षं षड्विधं मतम् ॥५२
घ्राणस्य गोचरो गन्धो गन्धत्वादिरपि स्मृतः ।
तथा रसो रसज्ञायास्तथा शब्दोऽपि च श्रुतेः ॥५३
उद्भूतरूपं नयनस्य गोचरो द्रव्याणि तद्वन्ति पृथक्त्वसंख्ये ।
विभागसंयोगपरापरत्व-स्नेहद्रवत्वं परिमाणयुक्तम् ॥५४
क्रिया जातिर्योग्यवृत्तिः समवायश्च तादृशः ।
गृह्णाति चक्षुः संयोगादालोकोद्भूतरूपयोः ॥५५
उद्भूतस्पर्शवद्द्रव्यं गोचरः सोऽपि च त्वचः ।
रूपान्यच्चक्षुषो योग्यं रूपमत्रापि कारणम् ॥५६

द्रव्याध्यक्षे त्वचो योगो मनसा ज्ञानकारणम् ।
मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ॥५७
ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।
महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८
विषयेन्द्रियसंबन्धो व्यापारः सोऽपि षड्विधः ।
द्रव्यग्रहस्तु संयोगात् संयुक्तसमवायतः ॥५९
द्रव्येषु समवेतानां तथा तत्समवायतः ।
तत्रापि समवेतानां शब्दस्य समवायतः ॥६०
तद्वृत्तीनां समवेतसमवायेन तु ग्रहः ।
प्रत्यक्षं समवायस्य विशेषणतया भवेत् ॥६१
विशेषणतया तद्वदभावानां ग्रहो भवेत् ।
यदि स्यादुपलभ्येतेत्येवं यत्र प्रसज्यते ॥६२
अलौकिकस्तु व्यापारस्त्रिविधः परिकीर्तितः ।
सामान्यलक्षणो ज्ञान-लक्षणो योगजस्तथा ॥६३
आसत्तिराश्रयाणां तु सामान्यज्ञानमिष्यते ।
तदिन्द्रियज-तद्धर्मबोधसामग्र्यपेक्ष्यते ॥६४
विषयी यस्य तस्यैव व्यापारो ज्ञानलक्षणः ।
योगजो द्विविधः प्रोक्तो युक्तयुञ्जानभेदतः ॥६५
युक्तस्य सर्वदा भानं चिन्तासहकृतोऽपरः ।
व्यापारस्तु परामर्शः करणं व्याप्तिधीर्भवेत् ॥६६
अनुमायां ज्ञायमानं लिङ्गं तु करणं न हि ।
अनागतादिलिंगेन न स्यादनुमितिस्तदा ॥६७
व्याप्यस्य पक्षवृत्तित्वधीः परामर्श उच्यते ।
व्याप्तिः साध्यवदन्यस्मिन्नसंबन्ध उदाहृतः ॥६८
अथवा हेतुमन्नि-ष्ठविरहाप्रतियोगिना ।
साध्येन हेतोरैकाधिकरण्यं व्याप्तिरुच्यते ॥६९
सिषाधयिषया शून्या सिद्धिर्यत्र न विद्यते ।
स पक्षस्तत्र वृत्तित्व-ज्ञानादनुमितिर्भवेत् ॥७०

अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।
कालात्ययापदिष्टश्च हेत्वाभासास्तु पञ्चधा ॥७१

आद्यः साधारणस्तु स्यादसाधारणोऽपरः ।
तथैवानुपसंहारी त्रिधानैकान्तिको भवेत् ॥७२

यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः ।
यस्तूभयस्माद् व्यावृत्तः स चासाधारणो मतः ॥७३

तथैवानुपसंहारी केवलान्वयिपक्षकः ।
यः साध्यवति नैवास्ति स विरुद्ध उदाहृतः ॥७४

आश्रयासिद्धिराद्या स्यात् स्वरूपासिद्धिरप्यथ
व्याप्यत्वासिद्धिरपरा स्यादसिद्धिरतस्त्रिधा ॥७५

पक्षासिद्धिर्यत्र पक्षो भवेन्मणिमयो गिरिः ।
ह्रदो द्रव्यं धूमवत्त्वादत्रासिद्धिरथापरा ॥७६

व्याप्यत्वासिद्धिरपरा नीलधूमादिके भवेत् ।
विरुद्धयोः परामर्शे हेत्वोः सत्प्रतिपक्षता ॥७७

साध्यशून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः ।
उत्पत्तिकालीनघटे गन्धादिर्यत्र साध्यते ॥७८

ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम् ।
सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम् ॥७९

वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते ।
गवयादिपदानां तु शक्तिधीरुपमाफलम् ॥८०

पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।
शब्दबोधः फलं तत्र शक्तिधीः सहकारिणी ॥८१

लक्षणा शक्यसंबन्धस्तात्पर्यानुपपत्तितः ।
आसत्तिर्योग्यताकाङ्क्षातात्पर्यज्ञानमिष्यते ॥८२

कारणं सन्निधानं तु पदस्यासत्तिरुच्यते ।
पदार्थे तत्र तद्वत्ता योग्यता परिकीर्तिता ॥८३

यत्पदेन विना यस्यानन्वयभावकता भवेत् ।
साकांक्षा, वक्तुरिच्छा तु तात्पर्यं परिकीर्तितम् ॥८४

साक्षात्कारे सुखादीनां करणं मन उच्यते।
अयौगपद्याज्ज्ञानानां तस्याणुत्वमिहेष्यते ॥८५

अथ द्रव्याश्रिता ज्ञेया निर्गुणा निष्क्रिया गुणाः।
रूपं रसः स्पर्शगन्धौ परत्वमपरत्वकम् ॥८६

द्रवो गुरुत्वं स्नेहश्च वेगो मूर्त्तगुणा अमी।
धर्माधर्मौ भावना च शब्दो बुद्ध्यादयोऽपि च ॥८७

एतेऽमूर्त्तगुणाः सर्वे विद्वद्भिः परिकीर्तिताः।
संख्यादिश्च विभागान्त उभयेषां गुणो मतः ॥८८

संयोगश्च विभागश्च संख्या द्वित्वादिकास्तथा।
द्विपृथक्त्वादयस्तद्वदेतेऽनेकाश्रिता गुणाः ॥८९

अतः शेषगुणाः सर्वे मता एकैकवृत्तयः।
बुद्ध्यादिषट्कं स्पर्शान्ता स्नेहः सांसिद्धिको द्रवः ॥९०

अदृष्टभावनाशब्दा अमी वैशेषिका गुणाः।
संख्यादिरपरत्वान्तो द्रवोऽसांसिद्धिकस्तथा ॥९१

गुरुत्ववेगौ सामान्य-गुणा एते प्रकीर्तिताः।
संख्यादिरपरत्वान्तो द्रवत्वं स्नेह एव च ॥९२

एते तु द्वीन्द्रियग्राह्या अथ स्पर्शान्तशब्दकाः।
बाह्यैकैकेन्द्रियग्राह्याः गुणत्वादृष्टभावनाः ॥९३

अतीन्द्रिया, विभूनां तु ये स्युर्वैशेषिका गुणाः।
अकारणगुणोत्पन्ना एते तु परिकीर्तिताः ॥९४

अपाकजास्तु स्पर्शान्ता द्रवत्वं च तथाविधम्।
स्नेहवेगगुरुत्वैकपृथक्त्वपरिमाणकम् ॥९५

स्थितिस्थापक इत्येते स्युः कारणगुणोद्भवाः।
संयोगश्च विभागश्च वेगश्चैते तु कर्मजाः ॥९६

स्पर्शान्तपरिमाणैक-पृथक्त्वस्नेहशब्दके।
भवेदसमवायित्वं अथ वैशेषिके गुणे ॥९७

आत्मनः स्यान्निमित्तत्वमुष्णस्पर्शगुरुत्वयोः।
वेगेऽपि च द्रवत्वे च संयोगादिद्वये तथा ॥९८

द्व्यर्थैव कारणत्वं स्यादथ प्रादेशिको भवेत् ।
वैशेषिको विभुगुणः संयोगादि-द्वयं तथा ॥९९

चक्षुर्ग्राह्यं भवेद्रूपं द्रव्यादेरुपलम्भकम् ।
चक्षुषः सहकारि स्याच्छुक्लादिकमनेकधा ॥१००

जलादिपरमाणौ तन्नित्यमन्यत् सहेतुकम् ।
रसस्तु रसनाग्राह्यो मधुरादिरनेकधा ॥१०१

सहकारी रसज्ञाया नित्यतादि च पूर्ववत् ।
घ्राणग्राह्यो भवेद् गन्धो घ्राणस्यैवोपकारकः ॥१०२

सौरभश्चासौरभश्च स द्वेधा परिकीर्त्तितः ।
स्पर्शस्त्वगिन्द्रियग्राह्यस्त्वचः स्यादुपकारकः ॥१०३

अनुष्णाशीतशीतोष्णभेदात् स त्रिविधो मतः ।
काठिन्यादि क्षितावेव नित्यतादि च पूर्ववत् ॥१०४

एतेषां पाकजत्वं तु क्षितौ नान्यत्र कुत्रचित् ।
तत्रापि परमाणौ स्यात् पाको वैशेषिके नये ॥१०५

नैयायिकानां तु नये द्व्यणुकादावपीष्यते ।
गणनाव्यवहारे तु हेतुः संख्याभिधीयते ॥१०६

नित्येषु नित्यमेकत्वमनित्येऽनित्यमिष्यते ।
द्वित्वादयः परार्धान्ता अपेक्षाबुद्धिजा मताः ॥१०७

अनेकाश्रयपर्याप्ता एते तु परिकीर्त्तिताः ।
अपेक्षाबुद्धिनाशाच्च नाशस्तेषां निरूपितः ॥१०८

अनेकैकत्वबुद्धिर्या सापेक्षाबुद्धिरिष्यते ।
परिमाणं भवेन्मानव्यवहारस्य कारणम् ॥१०९

अणु दीर्घं महद्ध्रस्वमिति तद्भेद ईरितः ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥११०

संख्यातः परिमाणाच्च प्रचयादपि जायते ।
अनित्यं, द्व्यणुकादौ तु संख्याजन्यमुदाहृतम् ॥१११

परिमाणं घटादौ तु परिमाणजमुच्यते ।
प्रचयः शिथिलाख्यो यः संयोगस्तेन जन्यते ॥११२

परिमाणं तूलकादौ नाशस्त्वाश्रयनाशतः ।
संख्यावत्तु पृथक्त्वं स्यात् पृथक्प्रत्ययकारणम् ॥११३
अन्योन्याभावतो नास्य चरितार्थत्वमिष्यते ।
अस्मात्पृथगिदं नेति प्रतीतिर्हि विलक्षणा ॥११४
अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः ।
कीर्तितस्त्रिविधस्त्वेष आद्योऽन्यतरकर्मजः ॥११५
तथोभयक्रियाजन्यो भवेत् संयोगजोऽपरः ।
आदिमः श्येनशैलादि-संयोगः परिकीर्तितः ॥११६
मेषयोः सन्निपातो यः स द्वितीय उदाहृतः ।
कपालतरुसंयोगात् संयोगस्तरुकुम्भयोः ॥११७
तृतीयः स्यात्, कर्मजोऽपि द्विधैव परिकीर्तितः ।
अभिघातो नोदनं च शब्दहेतुरिहादिमः ॥११८
शब्दाहेतुर्द्वितीयः स्याद्विभागोऽपि त्रिधा भवेत् ।
एककर्मोद्भवस्त्वाद्यो द्वयकर्मोद्भवोऽपरः ॥११९
विभागजस्तृतीयः स्यात् तृतीयोऽपि द्विधा भवेत् ।
हेतुमात्रविभागोत्थो हेत्वहेतुविभागजः॥१२०
परत्वञ्चापरत्वञ्च द्विविधं परिकीर्त्तितम् ।
दैशिकं कालिकञ्चापि, मूर्त्त एव तु दैशिकम् ॥१२१
परत्वं, मूर्त्तसंयोगभूयस्त्व-ज्ञानतो भवेत् ।
अपरत्वं तदल्पत्वबुद्धितः स्यादितीरितम् ॥१२२
तयोरसमवायी तु दिक्संयोगस्तदाश्रये ।
दिवाकरपरिस्पन्द-भूयस्त्वज्ञानतो भवेत् ॥१२३
परत्व—मपरत्वं तु तदीयाल्पत्व-बुद्धितः ।
अत्र त्वसमवायी स्यात् संयोगः कालपिण्डयोः ॥१२४
अपेक्षाबुद्धि-नाशेन नाशस्तेषामुदाहृतः ।
बुद्धेः प्रपञ्चः प्रागेव प्रायशो विनिरूपितः ॥१२५
अथावशिष्टोऽप्यपरः प्रकारः परिदर्श्यते ।
अप्रमा च प्रमा चेति ज्ञानं द्विविधमिष्यते ॥१२६

तच्छून्ये तन्मतिर्या स्यादप्रमा सा निरूपिता ।
तत्प्रपञ्चो विपर्यासः संशयोऽपि प्रकीर्त्तितः ॥१२७

आद्यो देहेष्वात्मबुद्धिः शङ्खादौ पीततामतिः ।
भवेन्निश्चयरूपा या, संशयोऽथ प्रदर्श्यते ॥१२८

किंस्विन्नरो वा स्थाणुर्वेत्यादिबुद्धिस्तु संशयः ।
तदभावाप्रकारा धीस्तत्प्रकारा तु निश्चयः ॥१२९

स संशयो मतिर्या स्यादेकत्राभावभावयोः ।
साधारणादि-धर्मस्य ज्ञानं संशयकारणम् ॥१३०

दोषोऽप्रमाया जनकः प्रमायास्तु गुणो भवेत् ।
पित्तदूरत्वादिरूपो दोषो नानाविधः स्मृतः ॥१३१

प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।
सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ॥१३२

पक्षे साध्यविशिष्टे च परामर्शो गुणो भवेत् ।
शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ॥१३३

शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।
गुणः स्याद् भ्रमभिन्नन्तु ज्ञानमत्रोच्यते प्रमा ॥१३४

अथवा तत्प्रकारं यज् ज्ञानं तद्वद्विशेष्यकम् ।
तत् प्रमा, न प्रमा नापि भ्रमः स्यान्निर्विकल्पकम् ॥१३५

प्रकारतादिशून्यं हि सम्बन्धानवगाहि तत् ।
प्रमात्वं न स्वतो ग्राह्यं संशयानुपपत्तितः ॥१३६

व्यभिचारस्याग्रहोऽथ सहचारग्रहस्तथा ।
हेतुर्व्याप्तिग्रहे, तर्कः क्वचिच्छङ्कानिवर्त्तकः ॥१३७

साध्यस्य व्यापको यस्तु हेतोरव्यापकस्तथा ।
स उपाधिर्भवेत् तस्य निष्कर्षोऽयं प्रदर्श्यते ॥१३८

सर्वे साध्यसमानाधिकरणाः स्युरुपाधयः ।
हेतोरेकाश्रये येषां स्वसाध्यव्यभिचारिता ॥१३९

व्यभिचारस्यानुमानमुपाधेस्तु प्रयोजनम् ।
शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते ॥१४०॥

अनुमान-गतार्थत्वादिति वैशेषिकं मतम् ।
तन्न सम्यक्, विना व्याप्तिबोधं शाब्दादिबोधतः ॥१४१
त्रैविध्यमनुमानस्य केवलान्वयिभेदतः ।
द्वैविध्यन्तु भवेद् व्याप्तेरन्वयव्यतिरेकतः ॥१४२
अन्वयव्याप्तिरुक्तैव व्यतिरेकादथोच्यते ।
साध्याभावव्यापकत्वं हेत्वभावस्य यद्भवेत् ॥१४३
अर्थापत्तिस्तु नैवेह प्रामाणान्तरमिष्यते ।
व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः ॥१४४
सुखन्तु जगतामेव काम्यं धर्मेण जन्यते ।
अधर्मजन्यं दुःखं स्यात् प्रतिकूलं सचेतसाम् ॥१४५
निर्दुःखत्वे सुखे चेच्छा तज्ज्ञानादेव जायते ।
इच्छा तु तदुपाये स्यादिष्टोपायत्वधीर्यदि ॥१४६
चिकीर्षा कृतिसाध्यत्व-प्रकारेच्छा च या भवेत् ।
तद्धेतुः कृतिसाध्येष्ट-साधनत्वमतिर्भवेत् ॥१४७
बलवद्द्विष्टहेतुत्वमतिः स्यात् प्रतिबन्धिका ।
तदहेतुत्वबुद्धेस्तु हेतुत्वं कस्यचिन्मते ॥१४८
द्विष्ट-साधनता-बुद्धिर्भवेद् द्वेषस्य कारणम् ।
प्रवृत्तिश्च निवृत्तिश्च तथा जीवनकारणम् ॥१४९
एवं प्रयत्नत्रैविध्यं तान्त्रिकैः परिदर्शितम् ॥
चिकीर्षाकृतिसाध्येष्ट-साधनत्वमतिस्तथा ॥१५०
उपादानस्य चाध्यक्षं प्रवृत्तौ जनकं भवेत् ।
निवृत्तिस्तु भवेद् द्वेषाद् द्विष्टसाधनताधियः ॥१५१
यत्नो जीवनयोनिस्तु सर्वदातीन्द्रियो भवेत् ।
शरीरे प्राणसञ्चारे कारणं तत् प्रकीर्त्तितम् ॥१५२
अतीन्द्रियं गुरुत्वं स्यात् पृथिव्यादिद्वये तु तत् ।
अनित्ये तदनित्यं स्यान्नित्ये नित्यमुदाहृतम् ॥१५३
तदेवासमवायि स्यात् पतनाख्ये तु कर्मणि ।
सांसिद्धिकं द्रवत्वं स्यान्नैमित्तिकमथापरम् ॥१५४

सांसिद्धिकन्तु सलिले द्वितीयं क्षितितेजसोः ॥
परमाणौ जले नित्यमन्यत्रानित्यमुच्यते ॥१५५
नैमित्तिकं वह्नि-योगात् तपनीय-घृतादिषु ।
द्रवत्वं स्यन्दने हेतुर्निमित्तं संग्रहे तु तत् ॥१५६
स्नेहो जले स नित्योऽणावनित्योऽवयविन्यसौ ।
तैलान्तरे तत्प्रकर्षाद्द दहनस्यानुकूलता ॥१५७
संस्कारभेदो वेगोऽथ स्थितिस्थापक-भावने ।
मूर्त्तमात्रे तु वेगः स्यात् कर्मजो वेगजः क्वचित् ॥१५८
स्थितिस्थापक-संस्कारः क्षितौ केचिच्चतुर्ष्वपि ।
अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम् ॥१५९
भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः ।
उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् ॥१६०
स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते ।
धर्माधर्मावदृष्टं स्याद्द धर्मः स्वर्गादिसाधनम् ॥१६१
गङ्गास्नानादि-यागादि-व्यापारः परिकीर्त्तितः ।
कर्मनाशाजलस्पर्शादिना नाश्यस्त्वसौ मतः ॥१६२
अधर्मो नरकादीनां हेतुर्निन्दितकर्मजः ।
प्रायश्चित्तादि-नाश्योऽसौ जीववृत्ती त्विमौ गुणौ ॥१६३
इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः ।
शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥१६४
कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।
सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥१६५
वीचि-तरङ्ग-न्यायेन तदुत्पत्तिस्तु कीर्त्तिता ।
कदम्बकोरक-न्यायादुत्पत्तिः कस्यचिन्मते ॥१६६
उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥१६७
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८

# भाषापरिच्छेदः

———:(0):———

## प्रत्यक्षखण्डम्

——[0]——

### सिद्धान्तमुक्तावली

**चूड़ामणीकृत-विधु-र्वलयीकृत-वासुकिः ।**
**भवो भवतु भव्याय लीलाताण्डवपण्डितः ॥ १ ॥**

### मुक्तावलीसंग्रहः

योगेन्द्रं ज्ञानदातारं तं नत्वा फणिभूषणम् ।
मुक्तावलेः संग्रहोऽयं यत्नतः क्रियते मया ॥
ज्ञानार्क-किरणोद्दीप्त-विबुधाय न मे श्रमः ।
स्वात्मज्ञान-विबोधाय भवतीह ममोद्यमः ॥

निर्विघ्न-परिसमाप्तये कृतस्य मङ्गलस्येश्वरनिर्देशरूपस्य "शिष्या अप्येवं कुर्यु"रिति शिष्यशिक्षायै निबन्धनं कुर्वन्नीश्वरं प्रार्थयते—**चूड़ामणी**ति । अचूड़ामणिः चूड़ामणिर्वत् सम्पद्यमानः कृत इति चूड़ामणीकृतः । अभूततद्भाव इत्यादिना च्वि-प्रत्ययः । एवं **वलयीकृ**तेत्यत्रापि बोध्यम् । भवत्यस्मादिति **भवो** महादेवः, **भव्याय** मङ्गलाय । कीदृशो भव इत्याह—**लीले**ति । लीलया ताण्डवं नृत्यम्, तत्र पण्डितः कुशल इत्यर्थः । इदं च विशेष्यं, नातः समाप्तपुनरात्तत्वम् । वस्तुतस्तु नियताकाङ्क्षारहितान्वय-

**অনু**—যিনি চন্দ্রকে চূড়ামণি (শিরোভূষণ) করিয়াছেন এবং যিনি বাসুকিকে বলয় (হস্তভূষণ) করিয়াছেন। লীলাতাণ্ডব-নিপুণ সেই শঙ্কর মঙ্গলের নিমিত্ত হউন ॥ ১ ॥

### বিবৃতি

এই শ্লোকে বিশেষ্য বাচক 'ভব' পদ, 'ভবতু' ক্রিয়ার সহিত অন্বিত হইয়া নিরাকাঙ্ক্ষ হইয়াও চতুর্থ পাদের 'লীলাতাণ্ডবপণ্ডিতঃ' এই বিশেষণের সহিত অন্বিত হওয়ায় 'সমাপ্ত-পুনরাত্তত্ব' দোষের শঙ্কা হয়। ক্রিয়ান্বয়ে নিরাকাঙ্ক্ষ বিশেষ্য বাচক পদের বিশেষণের সহিত অন্বয়ের নিমিত্ত পুনরনুসন্ধান বা স্মরণকে 'সমাপ্তপুনরাত্তত্ব' বলে। উহা কাব্যদোষ।

निजनिर्मितकारिकावलीमतिसंक्षिप्तचिरन्तनोक्तिभिः ।
विशदीकरवाणि कौतुकान् ननु राजीवदयावशंवदः ॥ २ ॥

बोधोत्तरं विशेष्यवाचकपदस्य पुनरनुसन्धानमेव समाप्तपुनरात्तत्वम् । तच्चाऽनियताकाङ्क्षया विशेषणान्वये एव । न चात्र तथान्वयबोधः, विधोः किमिति चूडामणीकरणमित्याद्याकाङ्क्षायाः सत्त्वात् । तस्मान्नात्र समाप्तपुनरात्तत्वम् ॥ १ ॥

शिष्यावधानाय प्रतिजानीते—**निजे**ति । **अती**ति । अति अत्यन्तं शब्दसंक्षेपो यासु ता अतिसंक्षिप्ताः, तादृश्यः चिरन्तनानां कणादादीनां या उक्तयो युक्तयस्ताभिरित्यर्थः । **विशदीकरवाणि** प्रकटीकरोमि । प्रार्थनाकाले लोट् । एतेनास्य सन्मूलकत्वं सूचितम् । **कौतुकादि**ति ग्रन्थकरणे क्लेशाभावः सूचितः । प्रयोजनमाह—**राजीवे**ति ॥ २ ॥

**অনু**—চিরন্তন অর্থাৎ প্রাচীন আচার্য্যগণের অতি সংক্ষিপ্ত উক্তির দ্বারা নিজ-নির্ম্মিত অর্থাৎ আমার রচিত 'কারিকাবলী'কে আমি রাজীবের প্রতি দয়া-বশংবদ হইয়া কৌতুকবশতঃ বিশদ করিতেছি। ॥ ২ ॥

### বিবৃতি

'ইহার আপাততঃ উত্তর এই যে—'ভবঃ' শব্দকে বিশেষণ এবং 'লীলা-তাণ্ডব-পণ্ডিতঃ' শব্দকে বিশেষ্য বলিলে ঐ দোষ হয় না। কিন্তু ইহার প্রকৃত উত্তর এই যে—যে স্থলে বিশেষ্যপদ ক্রিয়ার সহিত অন্বিত হইয়া পরে নিয়তাকাঙ্ক্ষা প্রযুক্ত সার্থক বিশেষণের সহিত অন্বিত হয়, সে স্থলে ঐ দোষ হয় না। 'লীলাতাণ্ডব-পণ্ডিতঃ' বিশেষণ দ্বারা 'বিধোঃ কিমিতি চূড়ামণীকরণং', 'কিমর্থং বা বাসুকের্বলয়ী-করণং'—এইরূপ নিয়তাকাঙ্ক্ষার নিবৃত্তি হওয়ায় উহা সার্থক বিশেষণ। এইজন্য এস্থলে ঐ দোষ হয় না ॥ ১ ॥

মহর্ষি কণাদের বৈশেষিক-সূত্র, প্রশস্তপাদাচার্য্যের প্রশস্তপাদ-ভাষ্য বা বল্লভাচার্য্যের ন্যায়-লীলাবতী প্রথম শিক্ষার্থীর পক্ষে অতি কঠিন। সুতরাং তদ্দ্বারা তাঁহাদের ব্যুৎপত্তিলাভ সহজ নহে—ইহা মনে করিয়াই বিশ্বনাথ কারিকা-বলীর রচনা ও ব্যাখ্যা করিয়াছেন। এই গ্রন্থ প্রাচীন প্রামাণিক গ্রন্থকারগণের উক্তি ও যুক্তি অবলম্বনে রচিত হওয়ায় প্রামাণিক বলিয়া গৃহীত হইবে। ইহা ব্যক্ত করিতে বিশ্বনাথ বলিয়াছেন—'**অতিসংক্ষিপ্ত**-চিরন্তনোক্তিভিঃ' ॥ ২ ॥

শাস্ত্রে প্রবৃত্তির হেতুভূত অনুবন্ধ-চতুষ্টয় (বিষয়, প্রয়োজন, সম্বন্ধ ও অধিকারী) অজ্ঞাত থাকিলে বুদ্ধিমান্ পাঠকগণের গ্রন্থের পাঠে বা শ্রবণে প্রবৃত্তি

सद्द्रव्या गुणगुम्फिता सुकृतिनां सत्कर्मणां ज्ञापिका
सत्-सामान्य-विशेष-नित्यमिलिताऽभाव-प्रकर्षोज्ज्वला।
विष्णोर्वक्षसि विश्वनाथ-कृतिना सिद्धान्त-मुक्तावली
विन्यस्ता मनसो मुदं वितनुतां सद्युक्तिरेषा चिरम्॥ ३॥

श्रोतृप्रवृत्त्युपयोगितया विषयादिकं सूचयन् स्वकीर्त्त्यनुवृत्तये ग्रन्थस्य स्वस्य च नाम निबध्नाति—**सद्द्रव्येति**। द्रव्यैः सहिता युक्तेत्यर्थः। **गुणे**ति। गुणैः गुम्फिता युक्ता, प्रतिपादकतासम्बन्धेन द्रव्यादिमतीत्यर्थः। यथा मुक्तावली द्रव्यादिमती, ग्रन्थोऽप्ययं प्रतिपादकतया तथेति भावः। जातिरूप-सामान्यस्यैव निरूपणीयत्वं सूचयितुमाह—**सत्सामान्ये**ति। जातिरूप-सामान्यमित्यर्थः। यद्वा—सन्ति सामान्य-विशेष-नित्य-मिलितानि यस्यां सा। नित्यमिलितः समवायः। अत्र च सामान्यमनुगत-धर्ममात्रं बोध्यम्। तेनोपाधिरूप-सामान्यस्य लाभान्न न्यूनता। **अभावे**ति। अभावप्रकर्षस्य प्रागभावादिभेदस्योज्ज्वला प्रकाशिकेति यावत्। **विश्वनाथ**कृतिनेति। क्वचित् कृष्णदास-कृतिनेति पाठः। **विन्यस्ता** विशेषतोऽर्पिता। **वितनुतां** विस्तारयतु॥ ३॥

**অনু—**পৃথিবী প্রভৃতি নব দ্রব্যের প্রতিপাদিকা—রূপ, রস প্রভৃতি চতুর্বিংশতি-সংখ্যক গুণবিশিষ্টা অর্থাৎ চতুর্বিংশতি গুণের প্রতিপাদিকা—উৎক্ষেপণাদি পঞ্চবিধ কর্ম্মের জ্ঞাপিকা—সামান্য, বিশেষ ও সমবায়ের বোধিকা—প্রাগভাবাদি চতুর্ব্বিধ অভাবের প্রকাশয়িত্রী—সদ্‌যুক্তিময়ী এই মুক্তাবলী পণ্ডিত বিশ্বনাথ কর্তৃক নারায়ণের বক্ষঃস্থলে অর্পিত হইয়া পণ্ডিতগণের চিত্তে সন্তোষ বর্দ্ধন করুক॥ ৩॥

**বিবৃতি**

হয় না। এজন্য গ্রন্থের প্রারম্ভে ঐ অনুবন্ধের উল্লেখ আবশ্যক *। কারিকাবলী বা মুক্তাবলীতে এই অনুবন্ধ-চতুষ্টয় উল্লিখিত না হইলেও সূচিত হইয়াছে। উক্ত গ্রন্থের প্রতিপাদ্য বিষয়—সাতটী পদার্থ। পদার্থের তত্ত্বজ্ঞান—প্রয়োজন। সম্বন্ধ—প্রতিপাদ্য-প্রতিপাদকত্ব। কারণ এই গ্রন্থ দ্রব্যাদি পদার্থের প্রতিপাদক; আর দ্রব্যাদি পদার্থ উহার প্রতিপাদ্য। এই সকল পদার্থের তত্ত্বজ্ঞানেচ্ছু ব্যক্তিই ইহার অধিকারী। এই শ্লোকটী শ্লেষাত্মক বলিয়া মুক্তাহার ও মুক্তাবলী গ্রন্থ—উভয়পক্ষে ব্যাখ্যাত হয়॥ ৩॥

শিষ্টগণ অভিমত কার্য্যারম্ভের পূর্ব্বে তাহার নির্ব্বিঘ্ন সমাপ্তি কামনা

---

* সিদ্ধার্থং সিদ্ধ-সম্বন্ধং শ্রোতুং শ্রোতা প্রবর্ত্ততে।
শাস্ত্রাদৌ তেন বক্তব্যঃ সম্বন্ধঃ সপ্রয়োজনঃ॥ শ্লোকবার্ত্তিক ১।১৭

**नूतन-जलधर-रुचये, गोपबधूटी-दुकूल-चौराय।**
**तस्मै कृष्णाय नमः, संसारमहीरुहस्य बीजाय॥ १॥**

विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति—**नूतने**त्यादि। ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणम्, विनापि मङ्गलं नास्तिका

स्वानुष्ठितस्य मङ्गलस्य तन्निबन्धनस्य च फलं दर्शयति—**विघ्ने**ति। निष्फलत्वान् मङ्गलाचरणमयुक्तमिति शङ्कते—**नन्वि**ति। निष्फलत्वञ्चानुमानसिद्धं मङ्गलं निष्फलं फलविशेषशून्यत्वात्, जलताड़नवदिति। मङ्गलस्य कारणत्वाभावे हेतुं व्यतिरेकव्यभिचारमाह—**विने**ति। अयञ्चान्वयव्यभिचारोपलक्षकः। तेन किरणावल्यादावन्वय-व्यभिचारोऽपि बोध्यः, मङ्गलसत्त्वेऽपि समाप्तेरदर्शनात्। अयं भावः—कारणत्वावेदकौ ह्यन्वयव्यतिरेकौ। तत्र तदतिरिक्त-यावत्कारणसत्त्वे तत्सत्त्वे तत्सत्त्वमन्वयः। तदतिरिक्त-यावत्कारणसत्त्वे तदसत्त्वे तदसत्त्वं व्यतिरेकः। प्रथम-द्वितीय-तत्पदं कारणपरम्, तृतीयन्तु कार्यपरम्। तेनाभिमतकारणसत्त्वे कार्यस्यासत्त्वमन्वयव्यभिचारः। अभिमतकारणाभावेऽपि कार्यस्य सत्त्वं व्यतिरेकव्यभिचारः। तज्ज्ञानेन कारणताघटकस्य नियतपूर्ववर्त्तित्वस्याग्रहः, अन्वयव्यभिचारज्ञानेन चानन्यथासिद्धत्वस्य। तस्मान् मङ्गले न समाप्ति-साधनत्वग्रह इति। **सेतु**टीकाकाराः पद्मनाभमिश्रास्त्वन्वयव्यभिचारोद्-

**অনু**—গ্রন্থ-সমাপ্তির প্রতিবন্ধকীভূত বিঘ্নের বিনাশের নিমিত্ত অনুষ্ঠিত মঙ্গল শিষ্য-শিক্ষার জন্য **নূতন** ইত্যাদি শ্লোকের দ্বারা গ্রন্থে উপনিবদ্ধ করিতেছেন।

[ পূর্ব্বপক্ষ ] মঙ্গল বিঘ্নধ্বংসের প্রতি কারণ নহে—সমাপ্তির প্রতিও কারণ নহে; যেহেতু মঙ্গল ব্যতিরেকেও ( চার্ব্বাক প্রভৃতি ) নাস্তিকাদির গ্রন্থে নির্ব্বিঘ্ন সমাপ্তি

**বিবৃতি**

করিয়া মঙ্গলাচরণ করেন। দেবতার স্মৃতি, স্তুতি বা প্রণতি প্রভৃতিই মঙ্গল। প্রাচীনমতে ঐ মঙ্গলের ফল—নির্ব্বিঘ্ন সমাপ্তি। এখানে বিঘ্ন শব্দে গ্রন্থ সমাপ্তির প্রতিবন্ধক বিঘ্নই বুঝিতে হইবে।

প্রাচীনমতে ঐরূপ ফলকল্পনার উদ্দেশ্য এই যে, ঈশ্বর-নমস্কাররূপ মঙ্গল সমাপ্তির অব্যবহিত পূর্ব্বে থাকে না। যে পদার্থ কার্য্যের অব্যবহিত পূর্ব্বে থাকে না, তাহা কারণ হইতে পারে না। এই হেতু সেই কারণ জন্য একটী দ্বার বা ব্যাপার কল্পনা করিতে হয়। স্বজন্য-ব্যাপারবত্তা সম্বন্ধে ঐ কারণ কার্য্যের পূর্ব্বে থাকিয়া

**दीनां ग्रन्थे निर्विघ्न-परिसमाप्ति-दर्शनादिति चेत्। न। अविगीत-शिष्टाचार-विषय-त्वेन मङ्गलस्य सफलत्वे सिद्धे, तत्र फलजिज्ञासायां, सम्भवति दृष्टफलकत्वेऽदृष्ट-**

भावनं निरर्थकमित्याहुः। **नास्तिकादीनां** चार्वाकादीनाम्। **निर्विघ्नेति**। विघ्नध्वंसपूर्वकेत्यर्थः। सिद्धान्ती समाधत्ते—**नेति**। समाधानन्त्वनुमानेन मङ्गलस्य निर्विघ्नसमाप्ति-फलकत्व-साधनम्। प्रयोगश्चायं—मङ्गलं समाप्तिफलकं समाप्त्यन्याफल-कत्वे सति सफलत्वात्, व्यतिरेकेण दर्शादिवदिति। हेतोर्विशेष्यासिद्धि-निरासायाऽनु-मानेन सफलत्वं साधयति—**अविगीतेति**। प्रयोगश्चायं—मङ्गलं सफलम् अविगीतशिष्टा-चारविषयत्वात्, दर्शादिवदिति। साध्यञ्च सफलत्वं बलवदनिष्टाजनकेष्टसाधनत्वरूपम्। सफलत्वाभाववति ज्ञानविषये सुखे विषयत्वसत्त्वादतिव्याप्तिस्त आह—**आचारेति**। ज्ञानेच्छाकृतिद्वेषाणां सविषयकत्वनियमादाचारश्चात्र कृतिरेव। कृति-विषयत्वं चैत्य-वन्दनादावप्यस्त्यत आह—**शिष्टेति**। शिष्टश्च फलसाधनतांशे भ्रान्तिरहितः। तेन व्युत्क्रमानुष्ठिते निष्फले दर्शादौ न व्यभिचारः। शिष्टाचारविषयत्वं श्येनयागादावप्यस्त्यत आह—**अविगीतेति**। आचारविशेषणम्। अविगीतत्वं तु बलवदनिष्टाजनकत्वम्। तेन साध्याभाववति श्येनादौ न व्यभिचारः। **सफलत्वे** सामान्यतः फलवत्त्वे। **सिद्धे**

দেখা যায়—ইহা যদি বলি, [ উত্তর ] না অর্থাৎ ইহা বলিতে পার না ; কারণ শিষ্টগণের অবিগীত ( অনিন্দিত ) আচারের ( কৃতির ) বিষয়ত্বরূপ হেতুদ্বারা মঙ্গলের সফলত্ব সিদ্ধ হইলে অর্থাৎ যেহেতু মঙ্গল শিষ্টগণের অনিন্দিত আচারের বিষয়, সেই হেতু তাহা সফল, এইরূপ অনুমান-প্রয়োগের দ্বারা মঙ্গলের সফলত্ব সিদ্ধ হইলে, সেই মঙ্গলে ফল-জিজ্ঞাসা হইলে ( মঙ্গলের ফল কি ? এইরূপ জিজ্ঞাসা হইলে ) দৃষ্টফল সম্ভাবিত হইলে অদৃষ্ট ফল-কল্পনার অনৌচিত্য হেতু এবং ( সমাপ্তির )

### বিবৃতি

কার্য্যের জনক হয়। এই জন্য প্রাচীন মতে বিঘ্নধ্বংস মঙ্গলের ব্যাপার বলিয়া কল্পিত হইয়াছে। ঐ মঙ্গল স্বজন্য-বিঘ্নধ্বংসবত্তা সম্বন্ধে সমাপ্তির অব্যবহিত পূর্ব্বে থাকিয়া সমাপ্তির কারণ হইয়া থাকে। এখানে স্বশব্দের অর্থ—মঙ্গল।

কার্য্যের নিয়ত পূর্ব্ববর্ত্তী অথচ অনন্যথাসিদ্ধ পদার্থই কারণ। উহা অন্বয় ও ব্যতিরেক দ্বারা নিরূপিত হয়। অন্যান্য সমস্ত কারণের উপস্থিতি কালে অভিমত কারণের সত্তা প্রযুক্ত কার্য্যের যে সত্তা, তাহা অন্বয় এবং অভিমত কারণের অসত্তা হেতু কার্য্যের যে অসত্তা, তাহাই ব্যতিরেক। কারণের সত্তাতে কার্য্যের যে অসত্তা,

**फलकल्पनाया अन्याय्यत्वात्, उपस्थितत्वाच्च समाप्तिरेव फलं कल्प्यते । इत्थञ्च**

अनुमिते । **तत्र** मङ्गले । **उपस्थितत्वादि**ति । आरब्धं कर्म मे निर्विघ्नं समाप्यता-मिति ग्रन्थारम्भे प्रवृत्त-पुरुष-कामना-विषयत्वेन समाप्तेरेवोपस्थितत्वादित्यर्थः । **कल्प्यते** अनुमीयते । अनुमानप्रयोगश्च प्रागेव दर्शितः । व्यतिरेकव्यभिचारमुद्धरति—**इत्थं**

উপস্থিতি হেতু অর্থাৎ আরব্ধং মে কর্ম্ম নির্ব্বিঘ্নং সমাপ্যতাম্—আমার আরব্ধ কর্ম্ম নির্ব্বিঘ্নে সমাপ্ত হউক,—এইরূপ কামনার বিষয়রূপে সমাপ্তির স্মরণ হেতু দৃষ্ট সমাপ্তিই মঙ্গলের ফল বলিয়া অনুমিত হয়।

## বিবৃতি

তাহা অন্বয়-ব্যভিচার। উহা অনন্যথাসিদ্ধত্ব জ্ঞানের বিরোধী। * কারণের অসত্তাতে কার্য্যের যে সত্তা, তাহা ব্যতিরেক ব্যভিচার। উহা নিয়তপূর্ব্ববর্ত্তিত্বজ্ঞানের বিরোধী।

পূর্ব্বপক্ষী বলেন—মঙ্গল বিঘ্নধ্বংসের কারণ নহে এবং সমাপ্তিরও কারণ নহে, যেহেতু নাস্তিকের গ্রন্থে মঙ্গল বিনাই সমাপ্তি হইয়াছে, কাদম্বরী, কিরণাবলী প্রভৃতি গ্রন্থে মঙ্গল সত্ত্বেও সমাপ্তি হয় নাই। সুতরাং সমস্ত গ্রন্থ সমাপ্তির প্রতি মঙ্গলের অন্বয়-ও ব্যতিরেক না থাকায় মঙ্গল সমাপ্তির কারণ নহে। এইরূপ পূর্ব্ব-পক্ষের সমাধান করিতে বিশ্বনাথ প্রথমে 'অবিগীত-শিষ্টাচার-বিষয়ত্ব' হেতু দ্বারা মঙ্গলে সফলত্বের অনুমিতি করিয়া, পরে সেই সফলত্ব হেতু দ্বারা মঙ্গলে সমাপ্তি-ফলকত্বের অনুমিতি করিয়াছেন। অভিপ্রায় এই যে, প্রথমে মঙ্গলে সমাপ্তি ভিন্ন ফলের অজনকত্ব এবং সফলত্ব হেতু সিদ্ধ না হইলে, তদ্দ্বারা মঙ্গলে সমাপ্তি-ফলকত্বের অনুমিতি হইতে পারে না। এই জন্য প্রথমে সফলত্বের অনুমিতি আবশ্যক।

সেই সফলত্বানুমানের প্রয়োগ হইতেছে—মঙ্গলং সফলম্ অবিগীত-শিষ্টাচার-বিষয়ত্বাৎ। এস্থলে পক্ষ হইতেছে—মঙ্গল। সাধ্য—সফলত্ব। সফলত্ব শব্দের অর্থ—বলবৎ অনিষ্টের অজনক ইষ্টের জনকত্ব। হেতু—অবিগীত-শিষ্টাচার-বিষয়ত্ব। আচার-বিষয়ত্ব শব্দের অর্থ—কৃতিবিষয়ত্ব। বিষয়ত্ব মাত্র হেতু হইলে সুখদুঃখে ব্যভিচার হইত। কারণ সুখদুঃখে বিষয়ত্ব থাকিলেও সাধ্য সফলত্ব নাই। সুখদুঃখ নিজেই ফল বলিয়া তাহার কোন ফল নাই। তাই সুখদুঃখে সাধ্য সফলত্ব নাই, অথচ হেতু বিষয়ত্ব আছে। যেখানে সাধ্য নাই অথচ হেতু আছে, সেখানে

---

* মহানৈয়ায়িক পদ্মনাভ মিশ্র প্রশস্তপাদভাষ্যের টীকা **সেতুতে** বলিয়াছেন যে—'অন্বয়ব্যভিচারের উদ্ভাবন অযৌক্তিক। কারণ উহা নিয়ত-পূর্ব্ববর্ত্তিত্ব বা অনন্যথাসিদ্ধত্ব জ্ঞানের বিরোধী নহে।'

**यत्र मङ्गलं न दृश्यते, तत्रापि जन्मान्तरीयं तत् कल्प्यते।** **यत्र च सत्यपि मङ्गले**

**चेति**। मङ्गलस्य समाप्तिफलकत्वे सिद्धे चेत्यर्थः। **तत्रापि** नास्तिकादिग्रन्थेऽपि।

**तत् मङ्गलं, कल्प्यते** अनुमीयते। प्रयोगश्च—अयं नास्तिकः कृतमङ्गलकः निर्विघ्न-समाप्ति-

এইরূপ অনুমানের দ্বারা মঙ্গলের সফলত্ব সিদ্ধ হওয়ায় যে স্থলে (নাস্তিকাদির গ্রন্থে) মঙ্গল দৃষ্ট হয় না, সে স্থলেও (সমাপ্তিরূপ হেতু দ্বারা) জন্মান্তরীয় মঙ্গল কল্পিত (অনুমিত) হয়। যে স্থলে (কাদম্বরী প্রভৃতি গ্রন্থে) মঙ্গল সত্ত্বেও সমাপ্তি দেখা

**বিবৃতি**

হেতুটী প্রকৃত হেতু নহে, উহা ব্যভিচারী। সুখদুঃখে এই ব্যাভচার বারণের জন্য আচার-বিষয়ত্ব হেতু হইবে, বিষয়ত্ব মাত্র নহে। সুখদুঃখে বিষয়ত্ব থাকিলেও আচার-বিষয়ত্ব হেতু না থাকায় ব্যভিচার হয় না। আচার বিষয়ত্বমাত্র হেতু হইলে বৌদ্ধগণের চৈত্য বন্দনে ব্যভিচার হইত। কারণ উহাতে সফলত্ব সাধ্য নাই অথচ হেতু আচার বিষয়ত্ব আছে। এই ব্যভিচার বারণের জন্য শিষ্টাচার-বিষয়ত্বটী হেতু হইবে, আচার বিষয়ত্বমাত্র নহে। চৈত্য বন্দনে আচার-বিষয়ত্ব থাকিলেও শিষ্টাচার-বিষয়ত্ব হেতু না থাকায় ব্যভিচার হয় না। শিষ্টাচার-বিষয়ত্ব মাত্র হেতু হইলে শ্যেন যাগে ব্যভিচার হয়। কারণ শ্যেন যাগে বলবৎ অনিষ্টের অজনক ইষ্টের জনকত্বরূপ সফলত্ব সাধ্য নাই, যেহেতু উহা ঘোরতর পাপজনক অভিচার কর্ম। অথচ উহাতে শিষ্টাচার-বিষয়ত্ব হেতু আছে। এই ব্যভিচার বারণের জন্য হেতু হইবে অবিগীত শিষ্টাচার-বিষয়ত্ব। অবিগীত পদের অর্থ—বলবৎ অনিষ্টের অজনক। উহা আচারের বিশেষণ। শ্যেন যোগে শিষ্টাচার-বিষয়ত্ব হেতু থাকিলেও অবিগীত শিষ্টাচার-বিষয়ত্ব হেতু না থাকায় ব্যভিচার হয় না। সুতরাং এই হেতু দ্বারা মঙ্গলে সফলত্বের অনুমিতি হইবে।

ফল দ্বিবিধ—দৃষ্ট ও অদৃষ্ট (পুণ্যবিশেষ)। দৃষ্ট ফল সম্ভব হইলে অদৃষ্ট ফলের কল্পনা অনুচিত। মঙ্গল সমাপ্তি ভিন্ন কোন দৃষ্ট ফলের জনক নহে। সমাপ্তিটীও কামনার বিষয়রূপে উপস্থিত। সুতরাং সফলত্ব হেতু দ্বারা মঙ্গলে সমাপ্তি জনকত্ব অনুমিত হইবে।

অন্বয় ব্যভিচার বা ব্যতিরেক ব্যভিচারের জ্ঞান কারণতার প্রত্যক্ষের বিরোধী হইলেও অনুমিতির বিরোধী নহে। সুতরাং অনুমানের দ্বারা মঙ্গল সমাপ্তির কারণ বলিয়া অনুমিত হইবে। যেখানে মঙ্গল দেখা যায় না, সেখানেও সমাপ্তি হেতু দ্বারা জন্মান্তরীয় মঙ্গল অনুমিত হইবে। নাস্তিকের ঐ মঙ্গল জন্মান্তরীয় সিদ্ধ

**समाप्तिर्न दृश्यते, तत्र बलवत्तरो विघ्नो विघ्नप्राचुर्यं वा बोध्यम्। प्रचुरस्यास्यैव बलवत्तर-विघ्ननिवारणे कारणत्वम्। विघ्नध्वंसस्तु मङ्गलस्य द्वारमित्याहुः प्राञ्चः।**

**नव्यास्तु—मङ्गलस्य विघ्नध्वंस एव फलम्। समाप्तिस्तु बुद्धि-प्रतिभादि-कारणकलापात्। न चैवं स्वतःसिद्ध-विघ्नविरहवता कृतस्य मङ्गलस्य निष्फल-**

मत्त्वान्नास्तिकवदिति। अन्वयव्यभिचारं निरस्यति—**यत्र** चेति। **तत्र** कादम्बर्यादौ। **बलवत्तरो** विजातीयः। **विघ्न**प्राचुर्यं वेति। अत्र च विघ्नसमसंख्याक-मङ्गलस्य विघ्ननाशकत्वेऽधिकसंख्याक-मङ्गलान्न्यूनसंख्याकविघ्नस्य नाशो न स्यादतः प्राचुर्यं वेति वाकारोऽनास्थायां बोध्यः। तथा च कादम्बर्यादौ बलवत्तरमङ्गलाभावान्न विघ्ननाशः। असति च विघ्ननाशे स्वजन्य-विघ्नध्वंसवत्तासम्बन्धेन तत्र तादृशमङ्गलाभावान्न समाप्तिरिति नान्वयव्यभिचारः। **प्रचुरस्य** बलवत्तरस्य। **अस्य** मङ्गलस्य। ननु कादम्बर्यादौ विघ्नध्वंसो माऽस्तु, समाप्तिः परं जायतामित्यत आह—**विघ्नध्वंसस्त्वि**ति। विघ्न-ध्वंसस्य मङ्गलव्यापारत्वात् तदभावान्न तत्र समाप्तिरिति भावः। **आहुरि**त्यस्वरसमाह। तद्बीजं तु मङ्गलस्य विघ्नध्वंसद्वारा समाप्तिजनकत्वं न सम्भवति, मङ्गलं विनापि प्रमत्तानुष्ठितसमाप्तेर्दर्शनात्। न च तत्र जन्मान्तरीयमङ्गलं कारणम्, जन्मान्तरीय-समाप्तिमुद्दिश्य शिष्टैस्तदकरणात्। **प्राञ्चः** उदयनादयः।

चिन्तामणिकृतां मतमाह—**नव्यास्त्वि**ति। **आहुरि**ति सम्बन्धः। **एवे**ति समाप्ति-व्यवच्छेदः। समाप्तेः कारणमाह—**समाप्तिस्त्वि**ति। सा च समाप्तिः चरमवर्णज्ञान-रूपा। **प्रतिभा** स्फूर्त्तिः। आदिपदेन विघ्नसंसर्गाभावग्रहः। मङ्गलस्य विघ्नध्वंसफलकत्वे

যায় না, সে স্থলে বলবত্তর ( বিজাতীয় ) বিঘ্ন অথবা ( মঙ্গল অপেক্ষা ) বিঘ্নবাহুল্য আছে বুঝিতে হইবে। প্রচুর ( বলবত্তর ) মঙ্গলই বলবত্তর বিঘ্ন-বিনাশের কারণ। বিঘ্নধ্বংস কিন্তু মঙ্গলের দ্বার ( ব্যাপার ), ইহা প্রাচীনগণ বলেন।

নব্যগণ কিন্তু বলেন—বিঘ্নধ্বংসই মঙ্গলের ফল। সমাপ্তি কিন্তু বুদ্ধি, প্রতিভা ( স্ফূর্তি—উপস্থিত বুদ্ধি ) প্রভৃতি কারণ সমুদায় হইতেই হইয়া থাকে।

[ পূঃ ] মঙ্গল যদি বিঘ্নধ্বংসেরই কারণ হয়, তবে স্বতঃসিদ্ধ বিঘ্নশূন্য ব্যক্তি

বিবৃতি

হওয়ায় ব্যতিরেক ব্যভিচার হয় না। কাদম্বরী প্রভৃতিতে সমাপ্তি দেখা যায় না; সুতরাং সেখানে বিজাতীয় বিঘ্ন আছে বুঝিতে হইবে। অতএব কাদম্বরী প্রভৃতি স্থলে গ্রন্থ-সমাপ্তির পূর্ব্বে স্বজন্য বিঘ্ন-ধ্বংসবত্তা সম্বন্ধে মঙ্গল না থাকায় অন্বয় ব্যভিচারও নাই"।

**त्वापत्तिरिति वाच्यम्। इष्टापत्तेः; विघ्नाशङ्कया तदाचरणात्; तथैव शिष्टाचारात्। न च तस्य निष्फलत्वे तद्बोधक-शिष्टाचारानुमित-वेदाप्रामाण्यापत्तिरिति,**

विघ्नात्यन्ताभाववता पुरुषेण कृतस्य मङ्गलस्य निष्फलत्वापत्तिरित्याशङ्कते—**न चे**ति। **एवं** मङ्गलस्य विघ्नध्वंसजनकत्वे। कथं तर्हि निष्फले प्रवृत्तिरत आह—**विघ्नाशङ्कये**ति। संशयनिश्चयसाधारणं विघ्नज्ञानं मङ्गलं प्रति प्रवर्त्तकमिति भावः। **तदे**ति। तदा'मङ्गल-परामर्शः। विघ्नसंशयेऽपि मङ्गले प्रवृत्तौ शिष्टाचारं प्रमाणयति—**तथे**ति। निर्विघ्न-पुरुषानुष्ठितमङ्गले कारणताया बाधितत्वेन बाधितार्थबोधकत्वाद् मङ्गलकर्त्तव्यता-बोधक-वेदस्याप्रामाण्यमाशङ्कते—**न चे**ति। **तस्य** तादृशमङ्गलस्य। **तद्बोधकः** कार्यकारण-

কর্তৃক অনুষ্ঠিত মঙ্গলের নিষ্ফলত্বের আপত্তি হয়—ইহা যদি বলি, [উঃ] না—ইহা বলিতে পার না। যেহেতু সেই আপত্তি ইষ্ট। বিঘ্নের আশঙ্কা হেতু (শিষ্টগণ) মঙ্গলাচরণ করিয়া থাকেন এবং সেইরূপ শিষ্টাচারও দেখা যায়। সেই মঙ্গল (স্বতঃসিদ্ধ বিঘ্নশূন্য ব্যক্তির অনুষ্ঠিত মঙ্গল) নিষ্ফল হইলে, মঙ্গলের সমাপ্তি-সাধনতার বোধক বেদের অর্থাৎ 'গ্রন্থসমাপ্তিকামো মঙ্গলমাচরেৎ' এই (অনুমিত) বেদবাক্যের অপ্রামাণ্যের আপত্তি হয়—ইহা বলিতে পার না। যেহেতু বিঘ্ন থাকিলে মঙ্গল-জন্য

**বিবৃতি**

নব্য নৈয়ায়িকগণের মতে—মঙ্গলের ফল বিঘ্নধ্বংস; সমাপ্তি নহে। সমাপ্তির কারণ বুদ্ধি, প্রতিভা, বিঘ্নাভাব প্রভৃতি। ইহা শিষ্টাচারানুমিত শ্রুতি দ্বারা এবং মুক্তাবলীর কথা দ্বারা বুঝা যায়। তাহা না হইলে "ন চ তদ্‌বোধকবেদাপ্রামাণ্যাপত্তিঃ" গ্রন্থে মঙ্গলের কর্তব্যতাবোধক বেদের অপ্রামাণ্য শঙ্কা ও তাহার সমাধান সঙ্গত হইত না। যে শ্রুতি প্রত্যক্ষ উপলব্ধ হয় না, স্মৃতি বা আচারের দ্বারা অনুমিত হয়, তাহাই অনুমিত শ্রুতি।

যাঁহার কোন বিঘ্ন নাই, তাহার অনুষ্ঠিত মঙ্গল বিঘ্নের নাশক না হওয়ায় নিষ্ফল হইলেও শ্রুতি অপ্রমাণ নহে। কারণ বিঘ্ন থাকিলেই মঙ্গল সেই বিঘ্নের নাশক হয়—ইহাই সেই অনুমিত শ্রুতির অর্থ; বিঘ্ন না থাকিলেও মঙ্গল তাহার নাশক হইবে—ইহা অর্থ নহে। **সতি বিঘ্নে** ইত্যাদি গ্রন্থে তাহাই উক্ত হইয়াছে। উক্ত গ্রন্থের তাৎপর্য্য এই যে, বিঘ্নধ্বংসের প্রতি বিঘ্নও একটি কারণ। যাঁহার বিঘ্ন নাই, সে স্থলে বিঘ্নরূপ কারণ না থাকায় বিঘ্নধ্বংস হয় নাই। সুতরাং ইহাতে মঙ্গল বিঘ্নধ্বংসের প্রতি অকারণ হইতে পারে না।

**वाच्यम्। सति विघ्ने तन्नाशस्यैव वेदबोधितत्वात्। अत एव पापभ्रमेण कृतस्य प्रायश्चित्तस्य निष्फलत्वेऽपि न तद्बोधकवेदाप्रामाण्यम्। मङ्गलन्तु विघ्नध्वंस-विशेषे कारणम्, विघ्नध्वंसविशेषे च विनायकस्तव-पाठादिः। क्वचिच्च विघ्नात्यन्ता-भाव एव समाप्तिसाधनं, प्रतिबन्धकसंसर्गाभावस्यैव कार्यजनकत्वात्। इत्थञ्च**

भावबोधकः। **सति विघ्ने** इति। तथा च विघ्नात्यन्ताभावस्थले प्रतियोगिरूप-कारणाभावान्न विघ्नध्वंसोदयस्तेन न मङ्गलस्य कारणत्वबाध इति भावः। **अत एव** नाशं प्रति प्रतियोगिनः कारणत्वादेव। **तद्बोधके**ति। पापनाशकत्वबोधकेत्यर्थः। ननु मङ्गलं न विघ्नध्वंसकारणम्; मङ्गलाभावेऽपि स्तवपाठाद् विघ्नध्वंसोदयात्, स्तवपाठस्य च कण्ठाद्यभिघातरूपत्वेन मङ्गलत्वाभावात्, भोगादिजन्यविघ्नध्वंसे व्यभिचाराच्चेति शङ्कां कार्यवैजात्यांगीकारेण परिहरति—**मङ्गलन्त्वि**ति। **विघ्न**ध्वंसविशेषे मङ्गलजन्य-विघ्नध्वंसं प्रति। तथा च मङ्गलजन्य-विघ्नध्वंसस्य स्तवपाठादिजन्यविघ्नान्यत्वात् तं प्रति मङ्गलस्यैव हेतुत्वान्न व्यभिचार इति भावः। विघ्नात्यन्ताभावस्थले प्रतियोगिनो विघ्न-स्यासत्त्वेन तद्ध्वंसस्याप्यभावात् समाप्तिर्न स्यादिति शङ्कां निरस्यति—**क्वचिच्चे**ति। विघ्नाभावजन्य-समाप्तौ वैजात्यांगीकाराद् विघ्नाभावजन्यसमाप्तिं प्रति विघ्नाभावस्य विघ्न-ध्वंसजन्यसमाप्तिं प्रति विघ्नध्वंसस्य च हेतुत्वान्न व्यतिरेकव्यभिचार इति भावः। नव्यमते व्यतिरेक-व्यभिचारमुद्धरति—**इत्थं चे**ति। दुरितध्वंसकल्पने तज्जनकमङ्गलकल्पने च

সেই বিঘ্নের নাশই বেদবোধিত অর্থাৎ যাহার বিঘ্ন আছে, মঙ্গল তাহারই বিঘ্নের নাশক—ইহাই উক্ত বেদবাক্যের প্রতিপাদ্য। এইজন্য পাপভ্রমে অনুষ্ঠিত প্রায়শ্চিত্ত নিষ্ফল হইলেও প্রায়শ্চিত্তের পাপনাশকতা বোধক বেদবাক্য অপ্রমাণ হয় না।

মঙ্গল বিঘ্নধ্বংস-বিশেষে কারণ। বিঘ্নধ্বংস-বিশেষে বিনায়ক স্তব পাঠাদি কারণ। কোন কোন স্থলে বিঘ্নের অত্যন্তাভাবই সমাপ্তির কারণ; যেহেতু

**বিবৃতি**

গণেশস্তব পাঠ ও মঙ্গল—উভয়েই বিঘ্নের নাশক হইলে, যে স্থলে গণেশ স্তবপাঠ হইতে বিঘ্নের নাশ হয়, সে স্থলে মঙ্গল বিনা বিঘ্নধ্বংস হওয়ায় ব্যতিরেক ব্যভিচার হয়। মঙ্গলনাশ্য বিঘ্ন, গণেশ-স্তব-পাঠ-নাশ্য বিঘ্ন হইতে ভিন্ন হইলে ভিন্ন ভিন্ন কার্যের প্রতি ভিন্ন ভিন্ন কারণ হওয়ায় ব্যতিরেক ব্যভিচার হয় না। এই অভিপ্রায় ব্যক্ত করিতে বিশ্বনাথ বলিয়াছেন—**বিঘ্নধ্বংসবিশেষে চ** ইত্যাদি।

नास्तिकादीनां ग्रन्थेषु जन्मान्तरीय-मङ्गलजन्य-दुरितध्वंसः स्वतःसिद्ध-विघ्नात्यन्ताभावो वाऽस्तीति न व्यभिचार इत्याहुः ।

**संसारेति** । संसार एव महीरुहो वृक्षस्तस्य बीजाय निमित्तकारणायेत्यर्थः ।

गौरवमत आह—**स्वतःसिद्धे**ति। यत्र च मङ्गले सत्यपि न समाप्तिः, तत्र मङ्गलाद् विघ्नध्वंसो भवत्येव। समाप्त्यभावस्तु विघ्नभूयस्त्वान्मङ्गलानन्तरोत्पन्नविघ्नान्तराद्वेति बोध्यम् ।

कृष्णस्य मानुषत्वभ्रान्तिं निराकरोति—**संसारे**ति । तत्पुरुषसमासान्महीरुहमात्रकर्त्तृत्वलाभः स्यात् ; तथा च तस्येश्वरत्वं न सिध्येदतः कर्मधारयाश्रयणम्, तेन च जगत्कर्त्तृत्वलाभात् तस्येश्वरत्वसिद्धिः । अयं भावः—न्यायनये जगत्-कर्त्तृतयैवेश्वरोऽभिप्रेतः । तच्च कर्त्तृत्वं तदनुकूलकृतिमत्त्वरूपं कार्यत्वेनैव साध्यमिति सूचयितुं तादृश-समस्तपदोपन्यासः । सर्वज्ञत्वादि-विशेषणोपन्यासे तु कार्यत्वहेतुकानुमानलाभो न स्यादिति । बीज-शब्द-सामर्थ्यात् तस्योपादानत्वभ्रमं निराकरोति—**निमित्ते**ति । दृश्यते च

প্রতিবন্ধকের সংসর্গাভাবই (প্রাগভাগ, ধ্বংস ও অত্যন্তাভাবই) কার্য্যের জনক হইয়া থাকে। এইরূপে নাস্তিকাদির গ্রন্থসমূহে জন্মান্তরীয় মঙ্গল-জন্য বিঘ্নধ্বংস অথবা স্বতঃসিদ্ধ বিঘ্নের অভাব অর্থাৎ বিঘ্নের অত্যন্তাভাব আছে বলিয়া (মঙ্গল ও বিঘ্নধ্বংসের কার্য্যকারণ-ভাবের) ব্যভিচার নাই।

'সংসার-মহীরুহস্য বীজায়' এই বাক্যের অর্থ—সংসাররূপ যে মহীরুহ অর্থাৎ বৃক্ষ, তাহার বীজ অর্থাৎ নিমিত্ত কারণ ঈশ্বরকে [ নমস্কার করি ]।

## বিবৃতি

নৈয়ায়িক মতে—প্রতিবন্ধকাভাব কার্য্যমাত্রের কারণ বলিয়া সমাপ্তিরও কারণ; বিঘ্ন সমাপ্তির প্রতিবন্ধক। এই জন্য বিঘ্নের অভাব প্রতিবন্ধকাভাবরূপে সমাপ্তির কারণ। বিঘ্নাভাবরূপ প্রতিবন্ধকাভাব সম্পাদনের নিমিত্ত মঙ্গলের অনুষ্ঠান আবশ্যক হইলেও সমাপ্তিকামী পুরুষের মঙ্গলাচরণ অকর্ত্তব্য নহে। যাঁহাদের বিঘ্নাভাব স্বতঃসিদ্ধ, তাঁহাদের বিঘ্নাশঙ্কায় মঙ্গলাচরণ কর্ত্তব্য। নাস্তিকগণ মঙ্গলাচরণ না করিলেও তাঁহাদের জন্মান্তরীয় মঙ্গল-জন্য বিঘ্নধ্বংস বা স্বতঃসিদ্ধ বিঘ্নাভাবরূপ প্রতিবন্ধকাভাব থাকায় সমাপ্তি হয়। এইজন্য নব্যমতে মঙ্গল ও বিঘ্নধ্বংসের কার্য্যকারণভাবের ব্যভিচার নাই।

ঈশ্বর সিদ্ধ না হইলে ঈশ্বরনমস্কাররূপ মঙ্গলের ফল বিঘ্নধ্বংস সিদ্ধ হইতে পারে

**एतेन ईश्वरे प्रमाणमपि दर्शितं भवति। तथा हि—यथा घटादिकाय कर्त्तृजन्यं,**

निमित्तकारणेऽपि बीजपद-प्रयोगः "दुखस्य बीजं पापं हि पुण्यं बीजं सुखस्य त्वि"ति। **एतेन** संसारकारणत्वकथनेन। **प्रमाण**मनुमानरूपम्। प्रयोगश्च—क्षित्यङ्कुरादिकं सकर्त्तृकं कार्यत्वाद् घटवदिति। अत्र चानुमाने सर्गाद्यकालीन-द्व्यणुकस्य पक्षत्वे पक्षासिद्धिः स्यात्, चार्वाकनये दीधितिकृन्नये च तस्यालीकत्वादतोऽङ्कुरपर्यन्तानुधावनम्। साध्यञ्च सकर्त्तृकत्वमुपादानगोचरापरोक्षज्ञान-चिकीर्षा-कृतिजन्यत्वरूपं बोध्यं, कार्यत्वहेतुकानुमानेन नित्यज्ञानेच्छाकृतिमत्तयैवेश्वरस्य साधनीयत्वादन्यथेश्वरे नित्यज्ञानेच्छयोरसिद्धिप्रसङ्गात्। ज्ञानेच्छाकृतीनां नित्यैकत्वसिद्धिस्तु लाघवतर्कसहकारेण तादृशानुमानेनैवेति ज्ञेयम्। तथा चैतदनुमानेन नित्यज्ञानेच्छाकृतीनां सिद्धौ, तादृश-नित्यज्ञानेच्छाकृतयः द्रव्याश्रिता गुणत्वात्, रूपवदित्यनुमानेन लाधवात् तासामेकद्रव्याश्रितत्वे सिद्धे तदेव द्रव्यमीश्वरः सिध्यतीति प्राचामाशयः। नव्यानां मते तूपादानगोचरकृतिजन्यत्वमेव साध्यं, कार्यं प्रति कृतेरेवान्वय-व्यतिरेकाभ्यां हेतुत्वात्। नित्यज्ञानेच्छयोः सिद्धिस्तु "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुत्यैवेति बोध्यम्। हेतुश्च कार्यत्वं प्रागभावप्रतियोगित्वरूपम्। न च क्षित्यङ्कुरे कार्यत्वमसिद्धं, सावयवत्वेन तत्साधनात्। सावयवत्वञ्च समवेतद्रव्यत्वम्। यद्यपि सकर्त्तृकत्वानुमितौ सावयवत्वस्य हेतुत्वमुचितं, तथापि लाघवात् सावयवत्वसाधितकार्यत्वस्य हेतुत्वं युक्तमिति बोध्यम्। अनुमित्यनुकूलां व्याप्तिं दर्शयति—**यथे**ति। जीवस्य

ঈশ্বর সংসাররূপ বৃক্ষের নিমিত্ত কারণ। এই কথা দ্বারা ঈশ্বরে ( অনুমান ) প্রমাণ

**বিবৃতি**

না। এইজন্য বিশ্বনাথ ঈশ্বরে প্রমাণ সূচনা করিতে বলিয়াছেন—**সংসার-মহীরুহস্য বীজায়**। সর্ব্বজ্ঞত্ব বা সর্ব্বশক্তিমত্ত্ব বিশেষণ দ্বারাও কৃষ্ণের ঈশ্বরত্ব সিদ্ধ হইত, কিন্তু তাহাতে সাক্ষাৎ প্রমাণ প্রদর্শিত হইত না। এইজন্য উক্ত বিশেষণ প্রযুক্ত হইয়াছে। ইহা দ্বারা ঈশ্বরে "ক্ষিত্যঙ্কুরাদিকং সকর্ত্তৃকং কার্য্যত্বাৎ ঘটবৎ"—এইরূপ অনুমান * প্রমাণ সূচিত হয়।

প্রত্যক্ষ প্রমাণবাদী চার্ব্বাক অতীন্দ্রিয় কোন বস্তু স্বীকার করেন না। রঘুনাথ শিরোমণিও দ্ব্যণুক স্বীকার করেন নাই। দ্ব্যণুককে পক্ষ করিলে তাঁহাদের মতে

* কুসুমাঞ্জলির পঞ্চম স্তবকের প্রথম কারিকায় ও অনুমানচিন্তামণিতে এই অনুমানের বিশেষ বিচার আছে। কুসুমাঞ্জলির ঐ কারিকায় ঈশ্বরসাধক আরও আটটি হেতু প্রদর্শিত হইয়াছে।

**तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्त्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्-कर्त्तृत्वेनेश्वरसिद्धिः। न च शरीराजन्यत्वेन कर्त्रजन्यत्व-साधकेन सत्प्रतिपक्ष इति वाच्यम्। अप्रयोजकत्वात्। मम तु कर्त्तृत्वेन कार्यत्वेन कार्यकारणभाव एव**

तादृशकृत्याश्रयत्वं वारयति—**न चे**ति। जीवकृतेः शरीरादिसृष्ट्युत्तरकालभावित्वात्, सृष्ट्यादौ जीवस्य तदाश्रयत्वायोगादिति भावः। स्थापनानुमाने प्रतिरोधानुमानमुद्भा-वयति—**न चे**ति। प्रयोगश्च—क्षित्यङ्कुरादिकं कर्त्रजन्यं शरीराजन्यत्वात्, गगनवदिति। अजन्यत्वमात्रस्य हेतुत्वे पक्षे तदभावात स्वरूपासिद्धिरतः—शरीरेति। प्रतिरोधानुमान-स्याभासतां दर्शयति—**अप्रयोजकत्वादि**ति। व्यभिचार-शङ्कानिवर्त्तकानुकूलतर्का-भावादित्यर्थः। अनुकूलतर्काभावाद्धि हेतौ व्यभिचारसन्देहस्तेन च व्याप्तिग्रहप्रतिबन्धे सति न साध्यानुमितिरिति भावः। हेतौ व्यभिचार-शङ्काकारश्च—शरीराजन्यत्वं कर्त्र-जन्यत्व-व्यभिचारि न वेति। व्यभिचारश्च साध्याभाववद्वृत्तित्वम्। तथा च शरीराजन्य-त्वं कर्त्रजन्यत्वाभाववद्वृत्ति न वेति पर्यवसितोऽर्थः। इदमापाततः। वस्तुतस्तु अजन्यत्व-स्योपाधित्वाद् व्यभिचार-निश्चय एवेति मन्तव्यम्। तर्कश्च व्याप्यारोपेण व्यापकारोपः। व्यभिचारशङ्का च कार्यत्वं सकर्त्तृत्वव्यभिचारि न वेति। तादृश-शङ्कोदये हेतोः संदिग्ध-व्यभिचारितया व्याप्यत्वसन्देहेन साध्यसाधकत्वं न स्यादिति भावः। कार्यत्वहेतु-कानुमाने व्यभिचार-शङ्कानिवर्त्तकं तर्कं दर्शयति—**ममे**ति। **कर्त्तृत्वे**नेत्यत्र तृतीयार्थोऽ-वच्छिन्नत्वम्। एवं **कार्यत्वे**नेत्यत्रापि। तथा च कार्यत्वावच्छिन्नं प्रति कर्त्तृत्वावच्छिन्नं कारणमिति कार्यकारणभाव एव अनुकूलस्तर्कः। तदाकारश्च—कार्यत्वं यदि सकर्त्तृकत्व-व्यभिचारि स्यात्, कृतिजन्यतावच्छेदकं न स्यादिति। न च तत्तत्कार्यं प्रति तत्तत्-कृतेरेवान्वयव्यतिरेकाभ्यां हेतुत्वाद् विशेषकार्यकारणभावेनैवोपपत्तौ तादृश-सामान्यकार्य-

প্রদর্শিত হইল। সেই প্রমাণটী এই :—ঘট প্রভৃতি কার্য্য যেরূপ কর্ত্তৃজন্য, ক্ষিত্যঙ্কুর (দ্ব্যণুক) প্রভৃতি কার্যও সেইরূপ কর্ত্তৃজন্য। সেই ক্ষিত্যঙ্কুর প্রভৃতির কর্ত্তৃত্ব আমাদের (জীবের) সম্ভব নহে, এই হেতু তাহাদের কর্ত্তৃরূপে ঈশ্বরের সিদ্ধি হয়। কর্ত্রজন্যত্ব অর্থাৎ অকর্ত্তৃকত্বের সাধক শরীরাজন্যত্ব হেতু দ্বারা (পূর্ব্বোক্ত অনুমানে) সৎপ্রতিপক্ষ হইয়াছে, ইহা বলিতে পার না; যেহেতু (উক্ত কর্ত্রজন্যত্ব হেতুতে) অপ্রয়োজকত্ব আছে অর্থাৎ শরীরাজন্যত্ব হেতুর ব্যভিচার শঙ্কার নিবর্ত্তক কোন অনুকূল তর্ক নাই। আমার পক্ষে কিন্তু কর্ত্তৃত্বরূপে ও কার্য্যত্বরূপে কার্য্যকারণভাবই অনুকূল তর্ক অর্থাৎ

**अनुकूलस्तर्कः। "द्यावाभूमी जनयन् देव एकः" ( यजुः अः १७ कः १९ ) "विश्वस्य कर्त्ता भुवनस्य गोप्ता" इत्यादय आगमा अप्यनुसन्धेयाः ॥ १ ॥**

कारणभावोऽसिद्ध इति वाच्यम्, यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि स इति नियमात्, कार्यसामान्याभावं प्रति तत्तत्कृत्यभावकूटस्य प्रयोजकत्वकल्पने गौरवाच्च तादृश-सामान्यकार्यकारणभावस्याप्यावश्यकत्वात्। न च यदीश्वरः कर्त्ता स्यात्, तर्हि शरीरी स्यादिति प्रतिकूलतर्क-सत्त्वात् कथं साध्यसिद्धिरिति वाच्यम्। ईश्वरसिद्ध्यसिद्धिभ्यां व्याघातात्। तदुक्तमुदयनाचार्यैः **कुसुमाञ्जलौ**—"आगमादेः प्रमाणत्वे बाधनादनिषेधनम्। आभासत्वे तु सैव स्यादाश्रयासिद्धिरुद्धते"ति। एवञ्चोक्तानुमानेनेश्वरसिद्धौ तदुच्चरितत्वेन वेदस्य प्रामाण्य-निश्चयाद् वेदोऽपीश्वरे प्रमाणमित्याह—**द्यावे**ति। आदिपदेन "यः सर्वज्ञः सर्वविदि"त्यादीनां परिग्रहः। **अनुसन्धेयाः** इति। प्रमाणत्वेन कार्यत्वहेतुकानुमानेऽनुकूलतर्कत्वेन वेत्यादिः। तदनुकूलतर्काकारश्च—क्षित्यङ्कुरादिकं यद्यकर्त्तृकं स्यात् तर्ह्येतदागमप्रतिपाद्येश्वरकर्त्तृकत्ववन्न स्यादिति ॥ १ ॥

কর্ত্তা ব্যতীত কার্য্য হয় না বলিয়া কার্য্যমাত্রই কর্ত্তৃজন্য—এই নিয়ম সকলেরই স্বীকার্য্য। কার্য্য যদি কর্ত্তা বিনাও হয়, তবে ঐরূপ নিয়ম না থাকুক—এইরূপ অনুকূল তর্ক আমার পক্ষে আছে।

"দ্যাবাভূমী জনয়ন্ দেব একঃ" (স্বর্গ ও পৃথিবীর সৃষ্টির জন্য এক মহেশ্বর [ব্রহ্মাকে সৃষ্টি করিলেন।]) "বিশ্বস্য কর্ত্তা, ভুবনস্য গোপ্তা" (বিশ্বের কর্ত্তা ও বিশ্বের পরিপালক) এই সমস্ত আগমও (ঈশ্বর সিদ্ধিতে) অনুসন্ধান করিবে অর্থাৎ এই সমস্ত আগম প্রমাণ দ্বারাও ঈশ্বরের সিদ্ধি হয়॥।

### বিবৃতি

পক্ষাসিদ্ধি হয়। এইজন্য এই অনুমানের পক্ষ—ক্ষিত্যঙ্কুর। ক্ষিত্যঙ্কুর শব্দের অর্থ—প্রথমোৎপন্ন কার্য্য। এই অনুমিতির সাধ্য—সকর্ত্তৃকত্ব। উহার অর্থ—কৃতিমজ্জন্যত্ব বা কৃতিজন্যত্ব। এই অনুমিতির হেতু—কার্য্যত্ব; দৃষ্টান্ত—ঘট। উক্ত অনুমানের দ্বারা পক্ষে কৃতিজন্যত্ব সিদ্ধ হইলে, "সা কৃতিঃ ক্বচিদাশ্রিতা গুণত্বাৎ রূপবৎ"—এই অনুমানের দ্বারা সেই কৃতির আশ্রয়রূপে যে পুরুষ সিদ্ধ হইবে; তিনিই ঈশ্বর। তিনি অশরীর। জীবের কর্ম্মানুসারে শরীরের সাহায্য ব্যতিরেকে তাঁহার ইচ্ছামাত্রেই দ্ব্যণুকাদিক্রমে এই জগৎ সৃষ্ট হয়। তাই তিনি জগৎকর্ত্তা।

लक्षणसमन्वयात्। **परममहत्त्वस्य तादृशगुणत्वात्, चतुर्थक्षणे द्वित्वादीनां नाशाभ्युपगमाद् द्वित्वादीनामपि तथात्वात् तद्वारणाय—विशेषेति।**

**द्वेषत्वा**दिकमित्यादिपदेन शब्दसंग्रहः। विशेषपदस्य प्रयोजनमाह—**परम**महत्त्वस्येति। **तादृश**गुणत्वात् चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वात्। तथाच चतुःक्षणवृत्तीनि यानि जन्यानि घटपटादीनि, तदवृत्तिर्जातिः परममहत्त्वत्वरूपा, तद्वान् गुणः परममहत्त्वं, तद्वत्ता कालेऽप्यस्तीत्यत आकाशात्मनोः साधर्म्यस्य कालेऽप्यतिप्रसक्तिस्तद्वारणाय—**विशेष**पदम्। तदुपादाने तु परममहत्त्वस्य सामान्यगुणत्वेन नातिव्याप्तिः, कालादौ तादृशविशेषगुणवत्त्वाभावात्। ननु परममहत्त्वत्वस्याऽपकर्षानाश्रयपरिमाणत्वरूपस्य तादृशजातिमद्गुणत्वाभावात् कथं तदादाय कालादावतिप्रसङ्ग इत्यत आह—**चतुर्थक्षण** इति। **नाशा**भ्युपगमादिति। तृतीयक्षणे एवापेक्षाबुद्धेर्नाशस्ततः स्वतृतीयक्षणे एव द्वित्वादीनां नाश इति केषाञ्चिन् नव्यानां मते द्वित्वादीनामपि चतुर्थक्षणे नाशः। प्रशस्तपादेनाप्युक्तं—"यस्मिन्नेव काले सामान्यज्ञानादपेक्षाबुद्धेर्विनाशस्तस्मिन्नेव काले

করিয়া লক্ষণ সঙ্গতি হইবে। পরমমহত্ত্বটী তাদৃশগুণ অর্থাৎ চতুঃক্ষণবৃত্তি-জন্যাবৃত্তি-জাতিবিশিষ্ট গুণ হয় বলিয়া এবং দ্বিত্বাদিরও চতুর্থ ক্ষণে নাশ অঙ্গীকৃত হওয়ায় দ্বিত্বাদি প্রভৃতিও তাদৃশ (চতুঃক্ষণবৃত্তি-জন্যাবৃত্তি-জাতি-বিশিষ্ট) গুণ হয় বলিয়া তাহাদের বারণের জন্য [সাধর্ম্যলক্ষণে গুণের বিশেষণরূপে] 'বিশেষ' পদটি প্রযুক্ত হইয়াছে।

**বিবৃতি**

প্রথম ক্ষণে অপেক্ষা বুদ্ধি (অয়মেকঃ, অয়মেকঃ—এইরূপ অনেক একত্ব বিষয়ক বুদ্ধি), দ্বিতীয়ক্ষণে দ্বিত্ব সংখ্যার উৎপত্তি, তৃতীয় ক্ষণে দ্বিত্বের নির্বিকল্পক জ্ঞান, চতুর্থ ক্ষণে দ্বিত্বং এইরূপে দ্বিত্বের সবিকল্পকজ্ঞান ও দ্বিত্ব-জ্ঞান জন্য অপেক্ষাবুদ্ধির নাশ এবং পঞ্চম ক্ষণে দ্বিত্বের নাশ ও দ্বিত্ববিশিষ্ট দ্রব্যের প্রত্যক্ষ হয়—ইহাই নিয়ম। কিন্তু যখনই (চতুর্থ ক্ষণে) অপেক্ষাবুদ্ধির নাশ হয়, তখনই (চতুর্থ ক্ষণেই) দ্বিত্বের আশ্রয়নাশে দ্বিত্ব বিনষ্ট হয়। ইহা প্রশস্তপাদাচার্য্যের সম্মত। কোন নব্য নৈয়ায়িকের মতেও—অপেক্ষাবুদ্ধির অনন্তর দ্বিত্বের উৎপত্তি সময়েই দ্বিত্বত্ব সামান্যলক্ষণা সন্নিকর্ষজন্য পূর্ব্বানুভূত দ্বিত্বের স্মরণ হয় এবং পরক্ষণেই 'ইমৌ দ্বৌ'—এইরূপে দ্বিত্ববিশিষ্ট দ্রব্যের প্রত্যক্ষ ও অপেক্ষাবুদ্ধির নাশ হয়। ইহা স্বীকার না করিলে তৃতীয় ক্ষণে সুখ বিনষ্ট হওয়ায় সুখের সবিকল্প প্রত্যক্ষ হইত না। সুতরাং এই মতেও দ্বিত্ব চতুর্থক্ষণে বিনষ্ট হয়। এইজন্যই বলিলেন—**চতুর্থক্ষণে দ্বিত্বাদীনাং নাশাভ্যুপগমাৎ ॥২৭॥**

**रूप-द्रवत्व-प्रत्यक्षयोगि स्यात् प्रथमत्रिकम्।**

**त्रिक्षणवृत्तित्व वा वाच्यम्। द्वेषत्वादिकमादायात्मनि लक्षणसमन्वयः ॥२७॥**

रूपेति। पृथिव्यप्तेजसां रूपवत्त्वं द्रवत्ववत्त्वं प्रत्यक्षविषयत्वञ्चेत्यर्थः। न च चक्षुरादीनां भर्जन-कपालस्थ-वह्नेरुष्मणश्च रूपवत्त्वे किं मानमिति वाच्यम्। तत्रापि तेजस्त्वेन रूपानुमानात्। एवं वाय्वानीत-पृथिवीजलतेजोभागानामपि

आश्रयविनाशाद् द्वित्वविनाश" इति। **तथा**त्वात् चतुःक्षणवृत्तिजन्यावृत्तिजातिमद्गुणत्वात्। **तद्वार**णाय तयोर्वारणाय। तथाच चतुःक्षणवृत्ति-जन्य-घटाद्यवृत्तिर्या द्वित्वत्वादिजातिस्तद्वान् गुणो द्वित्वादिस्तादृशगुणवत्ता घटादाविति तेष्वतिव्याप्तिस्तद्वारणाय—**विशेषे**ति। तदुपादाने तु-द्वित्वादीनां तादृशविशेषगुणत्वाभावान्नातिव्याप्तिरिति भावः। प्रथमोपस्थितत्वरूप-लाघवमभिसन्धायाह—**त्रिक्षणे**ति। **लक्षण**समन्वय इति। ईश्वरस्य द्वेषाभावाद् द्वेषत्वस्य तादृशगुणत्वात् तस्य चात्मनि सत्त्वाल्लक्षणसमन्वय इति भावः ॥२७॥

**प्रत्यक्ष**विषयत्वं बाह्येन्द्रियजन्य-लौकिकप्रत्यक्ष-विषयत्वम्, तेनात्मनि नातिव्याप्तिः।

অর্থাৎ সাধর্ম্ম্য লক্ষণে বিশেষপদ না দিলে চতুঃক্ষণবৃত্তিজন্যাবৃত্তিজাতিমদ্ গুণবত্ত্বই সাধর্ম্ম্য হইবে। ঐরূপ গুণবত্ত্ব পদে পরমমহত্ত্বও গৃহীত হইবে। কারণ পরমমহত্ত্বত্ব জাতি চতুঃক্ষণবৃত্তি কোন জন্য বস্তুতে বৃত্তি নহে। সুতরাং পরমমহত্ত্ব চতুঃক্ষণবৃত্তিজন্যাবৃত্তিজাতিমৎ গুণ এবং উহা দিক্ ও কালে থাকে বলিয়া অতিব্যাপ্তি হয়। এই জন্য লক্ষণে বিশেষপদ প্রযুক্ত হইয়াছে। আর দ্বিত্ব, ত্রিত্ব প্রভৃতি সংখ্যাগুলি চতুর্থ ক্ষণে বিনষ্ট হয়—এই মতে চতুঃক্ষণবৃত্তিজন্যাবৃত্তিজাতিমদ্গুণবত্ত্বপদে দ্বিত্ব, ত্রিত্ব প্রভৃতি গুণগুলিও গৃহীত হইবে এবং সেই গুণগুলি ঘটাদিতে থাকে বলিয়া অতিব্যাপ্তি হয়, এইজন্যও লক্ষণে বিশেষপদ প্রযুক্ত হইয়াছে। তাহাতে পরমমহত্ত্ব বা দ্বিত্ব, ত্রিত্ব প্রভৃতি গুণগুলি বিশেষগুণ নহে বলিয়া অতিব্যাপ্তি হয় না। অথবা [ উক্ত সাধর্ম্ম্যলক্ষণে 'চতুঃক্ষণবৃত্তি' স্থলে ] ত্রিক্ষণবৃত্তিত্বও বলা যায়। [ ত্রিক্ষণবৃত্তি জন্যাবৃত্তি জাতিপদে ] দ্বেষত্ব প্রভৃতি জাতিকে গ্রহণ করিয়া আত্মায় লক্ষণ সঙ্গতি হইবে ॥২৭॥

**রূপদ্রবত্ব** ইত্যাদি গ্রন্থের অর্থ—পৃথিবী, জল ও তেজের রূপবত্ত্ব, দ্রবত্ববত্ত্ব ও প্রত্যক্ষবিষয়ত্ব [ সাধর্ম্ম্য ]। [ পূঃ ] চক্ষুঃপ্রভৃতি ইন্দ্রিয়, ভর্জনকপালস্থিত ( ভাজা খোলার অন্তর্গত ) বহ্নি বা উষ্মার রূপবত্ত্বে অর্থাৎ রূপের অস্তিত্বে কি প্রমাণ? অর্থাৎ কোন প্রমাণ নাই—ইহা বলিতে পার না। [ উঃ ] কারণ সেই সকল

**पृथिवीत्वादिना रूपानुमानं बोध्यम्। न च घटादौ द्रुतसुवर्णादिभिन्ने तेजसि च द्रवत्ववत्त्वमव्याप्तमिति वाच्यं, द्रवत्ववद्वृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। घृततैलप्रभृतिषु पृथिवीषु जलेषु द्रुतसुवर्णादौ तेजसि च द्रवत्वसत्त्वात् तत्र च पृथिवीत्वादिसत्त्वात् तदादाय सर्वत्र लक्षणसमन्वयः। न च प्रत्यक्षविषयत्वं परमाण्वादावव्याप्तम्, अतिव्याप्तश्च रूपादाविति वाच्यम्, चाक्षुषलौकिक-**

**चक्षु**रादित्यादिना घ्राणादिपरिग्रहः। **तत्रापि** चक्षुरादिष्वपि। **रूपानु**मानादिति। अनुमानप्रयोगश्चायम्—चक्षुरादिकं रूपवत् तेजस्त्वात्, वैश्वानरवत्। वाय्वानीत-पृथिव्याद्यंशेषु रूपानुमानमतिदिशति—**एवमि**ति। चक्षुरादौ रूपानुमानवदित्यर्थः। अनुमानप्रयोगश्च—वाय्वानीत-पार्थिवभागः रूपवान् पृथिवीत्वात्, घटवदिति। एवं वाय्वानीत-जलादि-भागादावपि बोध्यम्। **द्रवत्व**वद्वृत्तिरिति। द्रवत्ववति घृत-लाक्षादौ वृत्तिर्यस्यास्तादृशी या द्रव्यत्वसाक्षाद्व्याप्या पृथिवीत्वादि-जातिस्तादृशजातिमत्त्वं पृथिव्यादावस्तीति नाव्याप्तिः। **चाक्षुषे**ति। चाक्षुष-लौकिकप्रत्यक्ष-विषया ये घटादयस्तेषु वृत्तिर्यस्यास्तादृशी या द्रव्यत्व-साक्षाद्व्याप्या पृथिवीत्वादि-जातिस्तादृशजातिमत्त्वं

পদার্থেও তেজস্ত্ব হেতুর দ্বারা রূপের অনুমান হয় অর্থাৎ চক্ষুরিন্দ্রিয়ং, রূপবৎ, তেজস্ত্বাৎ, বহ্নিবৎ,—এইরূপ অনুমান প্রয়োগের দ্বারা চক্ষুঃপ্রভৃতিতে রূপের সিদ্ধি হয়। এইরূপে বায়ুর দ্বারা আনীত পৃথিবী, জল ও তেজের অংশবিশেষেও (প্রবহমান বায়ুতে ভাসমান পৃথিবী, জল ও তেজের সূক্ষ্ম কণায়) [যথাক্রমে] পৃথিবীত্ব, জলত্ব ও তেজস্ত্ব হেতু দ্বারা রূপের অনুমান হয় জানিবে। [পূঃ] ঘটাদি দ্রব্যে, গলিত সুবর্ণাদি ভিন্ন তেজঃ পদার্থে দ্রবত্ববত্ত্ব অব্যাপ্ত হয়—ইহা বলিতে পার না। [উঃ] কারণ [এ স্থলে দ্রবত্ববত্ত্ব শব্দের] দ্রবত্ববদ্বৃত্তিদ্রব্যত্বব্যাপ্যজাতিমত্ত্ব [অর্থ] বিবক্ষিত হইয়াছে অর্থাৎ দ্রবত্ববিশিষ্ট ঘৃত প্রভৃতি পদার্থে যে দ্রব্যত্বব্যাপ্য পৃথিবীত্বাদি জাতি থাকে, তাদৃশ জাতিমত্ত্বই দ্রবত্ববত্ত্ব শব্দের অর্থ। ঘৃত, জতু (গালা), তৈল প্রভৃতি পৃথিবীতে, জলে এবং গলিত স্বর্ণ প্রভৃতি তেজঃ পদার্থে দ্রবত্ব থাকায় এবং দ্রবত্ববিশিষ্ট সেই সমস্ত পদার্থে [দ্রব্যত্বব্যাপ্য] পৃথিবীত্বাদি জাতি থাকায় সেই সমস্ত জাতিকে লইয়া সর্ব্বত্র লক্ষণ সঙ্গতি হয়। [পূঃ] প্রত্যক্ষবিষয়ত্বটী পরমাণু, দ্ব্যণুক প্রভৃতি [অপ্রত্যক্ষ] দ্রব্যে অব্যাপ্ত হয়। আর [গুণগুলি দ্রব্য নহে বলিয়া] রূপ, রসাদিতে অতিব্যাপ্ত হয়—ইহা বলিতে পার না। [উঃ] কারণ [এস্থলে

**गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः ॥ २८**

प्रत्यक्षविषयवृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वस्य विवक्षितत्वात्। आत्मन्यतिव्याप्ति-वारणाय—चाक्षुषेति। **गुरुणी** इति। गुरुत्ववत्त्वं रसवत्त्वं च पृथिवीजलयोरित्यर्थः। न च घ्राणेन्द्रियादीनां वाय्वानीत-पार्थिवादिभागानाञ्च रसादिमत्त्वे किं मानमिति वाच्यम्; तत्रापि पृथिवीत्वादिना तदनुमानात्। **द्वयोरिति**। पृथिवी-

पृथिव्यादित्रयेषु वर्त्तते, रूपादौ च न वर्त्तत इति नाव्याप्तिर्न वाऽतिव्याप्तिरिति भावः। **चाक्षुषेतीति**। आत्मनो मानसप्रत्यक्षविषयत्वेऽपि न बाह्य-प्रत्यक्षविषयत्वमिति तत्र नातिव्याप्तिः। घटो वायुमानिति प्रत्यक्षे घटविशेषणीभूत-वायावलौकिक-चाक्षुषप्रत्यक्ष-विषयत्वसत्त्वात् तादृशप्रत्यक्षविषय-वायुवृत्ति-द्रव्यत्व-व्याप्य-वायुत्व-जातिमति वायावतिव्याप्तिस्तद्वारणाय—**लौकिके**ति। तदुपादाने तु तत्र नातिव्याप्तिः, वायौ लौकिकप्रत्यक्ष-विषयत्वाभावादिति भावः। **गुरुत्ववत्त्वमिति**। तथा च भाष्यं—"द्वयोर्गुरुत्वं रसवत्त्वं चे"ति। तत्र गुरुत्वं माषकतोलकत्वादि। उपलक्षणञ्चैतत् पतनवत्त्वस्यालोकप्रकाश्यत्वस्याभास्वररूपवत्त्वस्येति। तथा चोक्तमाचार्यैः—आलोकप्रकाश्यत्वमभास्वररूपवत्त्वं चेति चार्थः।

প্রত্যক্ষবিষয়ত্ব শব্দের] চাক্ষুষ-লৌকিক-প্রত্যক্ষবিষয়ে বৃত্তি দ্রব্যত্বব্যাপ্য-জাতিমত্ত্ব [অর্থ] বিবক্ষিত হইয়াছে অর্থাৎ চাক্ষুষ লৌকিক প্রত্যক্ষের বিষয় যে যে পদার্থ, সেই পদার্থে বৃত্তি [বিদ্যমান] যে দ্রব্যত্বব্যাপ্য জাতি, সেই জাতিমত্ত্বই প্রত্যক্ষবিষয়ত্ব শব্দের অর্থ। লৌকিক চাক্ষুষ প্রত্যক্ষের বিষয় ঘট পটাদি পদার্থে বৃত্তি যে দ্রব্যত্বব্যাপ্য পৃথিবীত্ব জাতি, উহা পরমাণু প্রভৃতিতে থাকায় এবং রূপ, রসাদিতে না থাকায় অব্যাপ্তি ও অতিব্যাপ্তি হয় না। আত্মাতে অতিব্যাপ্তি বারণের জন্য অর্থাৎ প্রত্যক্ষ বিষয়ত্ব শব্দের—প্রত্যক্ষবিষয়বৃত্তি-দ্রব্যত্বব্যাপ্য জাতি—এইরূপ অর্থ করিলে, মানস প্রত্যক্ষের বিষয় আত্মাতে দ্রব্যত্বব্যাপ্য আত্মত্ব জাতি থাকায় অতিব্যাপ্তি হয়, এই অতিব্যাপ্তি বারণের জন্য [উক্ত লক্ষণে] **চাক্ষুষ**পদ প্রযুক্ত হইয়াছে। [তাহাতে আত্মা চাক্ষুষ প্রত্যক্ষের বিষয় নহে বলিয়া তাদৃশ জাতি আত্মাতে না থাকায় অতিব্যাপ্তি হয় না]। **গুরুণী দ্বে** ইত্যাদি গ্রন্থের অর্থ—গুরুত্ববত্ত্ব ও রসবত্ত্ব পৃথিবী ও জলের [সাধর্ম্য]। [পূঃ] ঘ্রাণেন্দ্রিয় ও রসনেন্দ্রিয়ের এবং বায়ু দ্বারা আনীত পার্থিবাংশ ও জলাংশের রসবত্ত্বে কি প্রমাণ? অর্থাৎ কোন প্রমাণ নাই—ইহা বলা যায় না। [উঃ] কারণ সেখানেও পৃথিবীত্বাদি হেতু দ্বারা তাহার (রসের) অনুমান হয়। **দ্বয়োঃ**

**आत्मानो भूतवर्गाश्च विशेषगुणयोगिनः ।**
**यदुक्तं यस्य साधर्म्यं वैधर्म्यमितरस्य तत् ॥ २९**

तेजसोरित्यर्थः। नच नैमित्तिक-द्रवत्ववत्त्वं घटादौ वह्न्यादौ चाव्याप्तमिति वाच्यम्, नैमित्तिक-द्रवत्वसमानाधिकरण-द्रव्यत्वव्याप्य-जातिमत्त्वस्य विवक्षितत्वात्।।२८

आत्मान इति। पृथिव्यप्तेजोवाय्वाकाशात्मनां विशेषगुणवत्त्वमित्यर्थः। यदुक्तमिति। ज्ञेयत्वादिकं विहायेति बोध्यम्। तत्तु न कस्यापि वैधर्म्यं, केवलान्वयित्वात्।

**पार्थिवा**दीत्यादिना जलभागपरिग्रहः। **तदनु**मानादिति। अनुमानप्रयोगश्च—घ्राणेन्द्रियं रसादिमत् पृथिवीत्वात्, आम्रफलवदिति। **नैमित्तिक**द्रवत्वेति। द्रव्यत्वव्याप्यजलत्व-जातिमादाय जलेऽतिव्याप्तिस्तद्वारणाय—**समानाधि**करणेति। अन्यत्सर्वं पूर्ववत् ॥२८

**विशेष**गुणवत्त्वमिति। विशेषगुणाश्च—"बुद्ध्यादिषट्कं स्पर्शान्ताः स्नेहः सांसिद्धिको द्रवः। अदृष्ट-भावना-शब्दा अमी वैशेषिका गुणाः ॥" इति गुणग्रन्थे वक्ष्यमाणा बुद्ध्यादिरूपाः। उपलक्षणं चैतत्। प्रत्यक्षगुणवत्त्वमित्यपि द्रष्टव्यम्। इत्थं साधर्म्यमाचष्टे—**यदुक्त**मिति। यथा सत्तावत्त्वं द्रव्य-गुण-कर्मणां साधर्म्यमन्येषां वैधर्म्यम्। एवमन्यत्रापि बोध्यम्। **ज्ञेयत्वा**दिकमित्यादिपदेन सप्तपदार्थसाधर्म्यत्वेनोक्ता अभिधेयत्वादयो धर्मा ग्राह्याः ॥ २९ ॥

ইত্যাদি গ্রন্থের অর্থ—পৃথিবী এবং তেজের। [পূঃ] নৈমিত্তিক দ্রবত্ব ঘটাদিতে এবং বহ্নি প্রভৃতিতে অব্যাপ্ত—ইহা বলা যায় না। [উঃ] কারণ [এ স্থলে নৈমিত্তিক দ্রবত্ব শব্দের] নৈমিত্তিক-দ্রবত্বসমানাধিকরণ দ্রব্যত্বব্যাপ্যজাতিমত্ত্ব [অর্থ] বিবক্ষিত হইয়াছে অর্থাৎ নৈমিত্তিক দ্রবত্বের সমানাধিকরণ যে দ্রব্যত্বব্যাপ্য জাতি, সেই জাতিমত্ত্বই নৈমিত্তিক দ্রবত্ববত্ত্ব শব্দের অর্থ। ঘট, পটাদি দ্রব্যে নৈমিত্তিক দ্রবত্ব না থাকিলেও ঘৃত, তৈল প্রভৃতিতে নৈমিত্তিক দ্রবত্ব এবং দ্রব্যত্বব্যাপ্য জাতি পৃথিবীত্ব থাকায়, ঐ পৃথিবীত্ব জাতি নৈমিত্তিক দ্রবত্ব-সমানাধিকরণ দ্রব্যত্বব্যাপ্য জাতি হয়। উহা ঘট পটাদি সমস্ত পৃথিবীতে থাকে বলিয়া উক্ত সাধর্ম্যের অব্যাপ্তি হইল না ॥২৮

**আত্মানঃ** ইত্যাদি গ্রন্থের অর্থ—পৃথিবী, জল, তেজঃ, বায়ু, আকাশ ও আত্মার বিশেষগুণবত্ত্ব [সাধর্ম্য]। **যদুক্তং** ইত্যাদি গ্রন্থের অর্থ—জ্ঞেয়ত্বাদি ভিন্ন, এই [বৈধর্ম্য] বুঝিতে হইবে। জ্ঞেয়ত্ব প্রভৃতি কিন্তু কেবলান্বয়ী (*বৃত্তিমৎ অত্যন্তাভাবের অপ্রতিযোগী—সর্ব্বপদার্থবৃত্তি) বলিয়া কাহারও বৈধর্ম্য নহে ॥২৯॥

स्पर्शादयोऽष्टौ वेगाख्यः संस्कारो मरुतो गुणाः।
अष्टौ स्पर्शादयो रूपं द्रवो वेगश्च तेजसि ॥ ३०
स्पर्शादयोऽष्टौ वेगश्च गुरुत्वञ्च द्रवत्वकम्।
रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश ॥ ३१
स्नेहहीना गन्धयुताः क्षितावेते चतुर्दश
बुद्ध्यादि-षट्कं संख्यादि-पञ्चकं भावना तथा ॥ ३२
धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दश।
संख्यादिपञ्चकं कालदिशोः शब्दश्च ते च खे ॥ ३३
संख्यादयः पञ्च बुद्धिरिच्छा यत्नोऽपि चेश्वरे।
परापरत्वे संख्याद्याः पञ्च वेगश्च मानसे ॥ ३४
तत्र क्षितिर्गन्ध-हेतुर्नाना-रूपवती मता।

**स्पर्शादय**' इति। ते च संख्यादयः पञ्च। **खे**—आकाशे ॥३०—३४॥

साधर्म्य-वैधर्म्ये निरूप्य सम्प्रति प्रत्येकं पृथिव्यादिकं निरूपयति—**तत्र क्षितिरित्यादिना**। **गन्धहेतुरिति**। गन्धसमवायिकारणमित्यर्थः। यद्यपि गन्ध-

वायोर्नवैकादश तेजसो गुणा जल-क्षिति-प्राणभृतां चतुर्दश। दिक्कालयोः पञ्च षड़ेव चाम्बरे महेश्वरेऽष्टौ मनसस्तथैव चेति प्राचीनश्लोकमनुसृत्य वायोस्तावद् गुणानाह—मूले **स्पर्शादयो**ऽष्टाविति। गुणोद्देशक्रमेणैवात्र गुणसंख्या ग्राह्या। एवमन्यत्रापि। तथा च स्पर्श-संख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वापरत्वान्यष्टौ वेगाख्यसंस्कारश्चेति वायोर्नवगुणा इत्यर्थः। ते पूर्वोक्ताः संख्यादयः पञ्च। **ईश्वर** इति। **दीधिति**-कृतस्तु पदार्थतत्त्वनिरूपणे ईश्वरस्य परिमाणवत्त्वे मानाभाव इत्याहुः। **तट्टीकायां** रामभद्रसार्वभौमास्तु संख्याबुद्धीच्छाप्रयत्नसुखानीति पञ्चैवेश्वरस्य गुणा इत्याहुः॥ ३०-३४॥

साधर्म्य-वैधर्म्यं निरूप्य प्रशस्तपादभाष्यमनुस्मरन् प्रत्येकं पृथिव्यादि-नवकं निरूपयितुमुपक्रमते—**तत्र क्षिति**रिति। गन्धहेतुत्वं कालादावतिव्याप्तमतस्तस्यार्थमाह—**गन्ध-**

**স্পর্শাদয়ঃ** ইত্যাদি গ্রন্থদ্বারা বায়ু প্রভৃতি দ্রব্যের গুণের সংখ্যা বলিতেছেন। **তে চ** ইহার অর্থ—সংখ্যাদি পাঁচটী ও শব্দ। ইহারা খে—আকাশে থাকে॥৩০-৩৪

সাধর্ম্ম্য ও বৈধর্ম্ম্য নিরূপণ করিয়া সম্প্রতি **তত্র** ইত্যাদি গ্রন্থের দ্বারা পৃথিব্যাদি প্রত্যেক দ্রব্য নিরূপণ করিতেছেন। মূলোক্ত **গন্ধহেতুঃ** শব্দের অর্থ—গন্ধের

**वत्त्वमात्रं पृथिव्या लक्षणमुचितं, तथापि पृथिवीत्वजातौ प्रमाणोपन्यासाय कारणत्वमुपन्यस्तम्। तथा हि—पृथिवीत्वं हि गन्धसमवायिकारणतावच्छेदकतया**

समवायीति। ननु सुरभ्यसुरभि-कपालारब्धे निर्गन्धे घटेऽव्याप्तिरिति चेत्। न। गन्धसमवायिकारणवृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वस्य तदर्थत्वात्। पृथिव्या लघूभूतं गन्धवत्त्वलक्षणं परित्यज्य गुरुभूत-गन्धसमवायिकारणत्वलक्षणकरणे प्रयोजनमाह—**यद्यपी**ति। **प्रमाणो**पन्यासायेति। प्रत्यक्षायोग्यपृथिव्यां पृथिवीत्वस्य प्रत्यक्षासम्भवात् तत्साधारण्येन पृथिवीत्वसिद्ध्यर्थं तदुपन्यासः। यो हि—पृथिवीं स्वरूपतो जानन्नपि कुतश्चिद्व्यामोहात् पृथिवीति न व्यवहरति, तं प्रतीयं पृथिवीति व्यवहारसाध्नार्थं नवद्रव्याणां मिथो भेद-सिद्ध्यर्थञ्च पृथिवीत्वसाधनमिति बोध्यम्। लीलावत्याः पृथिवीग्रन्थमनुसृत्य पृथिवीत्वजातावनुमान-प्रमाणमाह—**गन्धसम**वायिकारणतेत्यादिना। प्रयोगश्च—गन्धसमवायिकारणता किञ्चिद्धर्मावच्छिन्ना कारणतात्वात् दण्डनिष्ठ-घटकारणतावदिति। तथा च प्रतीयमानस्य च तस्यानुगतधर्मस्य जातिबाधकाभावाज्जातित्वमिति भावः।

সমবায়ী কারণ। •যদিও গন্ধবত্ত্বমাত্রই পৃথিবীর লক্ষণ হওয়া উচিত, তথাপি [এস্থলে] পৃথিবীত্ব জাতিতে প্রমাণ প্রদর্শনের জন্য [ গন্ধের সমবায়ী ] কারণত্ব প্রযুক্ত হইয়াছে। সেই প্রমাণটী এইরূপ—পৃথিবীত্ব জাতি গন্ধসমবায়িকারণতার অবচ্ছেদকরূপে সিদ্ধ হয় অর্থাৎ গন্ধসমবায়িকারণতা কিঞ্চিদ্ধর্মাবচ্ছিন্না কারণতাত্বাৎ—এইরূপ অনুমান

**বিবৃতি**

পৃথিবীর লক্ষণ হইতেছে গন্ধবত্ত্ব। ঐ •গন্ধবত্ত্ব লক্ষণের দ্বারা যদিও ঐ গন্ধাশ্রয় পৃথিবীতে পৃথিবী ব্যবহার ও জলাদির ভেদ সিদ্ধ হইতে পারে, তথাপি যে পৃথিবীতে গন্ধের প্রত্যক্ষ হয় না, উহাতে পৃথিবী ব্যবহার বা ইতরের ভেদ সিদ্ধ হইতে পারে না। সুতরাং ঐরূপ পৃথিবীতে গন্ধসিদ্ধি ও ইতরের ভেদ সিদ্ধির জন্য পৃথিবীত্বের সিদ্ধি আবশ্যক। প্রত্যক্ষযোগ্য পৃথিবীতে ঐ পৃথিবীত্ব প্রত্যক্ষসিদ্ধ হইলেও প্রত্যক্ষের অযোগ্য পরমাণু, দ্ব্যণুক প্রভৃতি পৃথিবীতে পৃথিবীত্বপ্রত্যক্ষসিদ্ধ নহে। সেই সমস্ত স্থানে —গন্ধসমবায়িকারণতা কিঞ্চিদ্ধর্মাবচ্ছিন্না গন্ধসমবায়িকারণতাত্বাৎ এইরূপ অনুমানের দ্বারা গন্ধসমবায়িকারণতার অবচ্ছেদকরূপে পৃথিবীত্ব সিদ্ধ হইবে। কিন্তু পৃথিবী গন্ধসমবায়ী কারণ না হইলে ঐরূপ অনুমান হইতে পারে না। ঐরূপ অনুমান প্রদর্শনের জন্য পৃথিবীকে গন্ধসমবায়ী কারণ বলা হইয়াছে। এইজন্যই বিশ্বনাথ বলিলেন—**পৃথিবীত্ব-জাতৌ প্রমাণোপন্যাসায়।**

**सिध्यति, अन्यथा गन्धत्वावच्छिन्नस्याऽकस्मिकत्वापत्तेः। न च पाषाणादौ गन्धाभावाद् गन्धवत्त्वमव्याप्तमिति वाच्यं, तत्रापि गन्धसत्त्वात्। अनुपलब्धिस्तु**

**अन्यथा** पृथिवीनिष्ठ-गन्धसमवायिकारणतायाः पृथिवीत्वानवच्छिन्नत्वे, निरवच्छिन्नत्वे इति यावत्। **गन्धत्वा**वच्छिन्नस्य गन्धमात्रस्य। **आकस्मिक**त्वापत्तेः। नियतकारणानियम्यत्वापत्तेः। तथा च गन्धमात्रं प्रति पृथिव्या अकारणत्वे कदाचिज्जलादावपि तदुत्पादः स्यादिति भावः। पृथिवीलक्षणस्य गन्धवत्त्वस्य पाषाणादावव्याप्तिमाशङ्कते—**न चे**ति। **तत्रापि** पाषाणादावपि। **गन्ध**सत्त्वात्—पृथिवीत्वेन तत्र गन्धानुमानात्। तत्प्रयोगश्च—पाषाणादिर्गन्धवान् पृथिवीत्वात् घटवदिति। नन्वेवं सति पाषाणादौ कथं न गन्धोपलब्धिरित्यत आह—**अनुत्कट**त्वेनेति। उत्कट गन्ध एवोपलभ्यते,

প্রয়োগের দ্বারা গন্ধের সমবায়িকারণতার অবচ্ছেদকরূপে পৃথিবীত্ব জাতি সিদ্ধ হয়। অন্যথা অর্থাৎ গন্ধ সমবায়িকারণতা পৃথিবীত্ব ধর্মের দ্বারা অবচ্ছিন্ন নহে, নিরবচ্ছিন্ন—ইহা স্বীকার করিলে গন্ধত্বাবচ্ছিন্নের ( গন্ধমাত্রের ) আকস্মিকত্বাপত্তি অর্থাৎ গন্ধমাত্রই বিনা কারণে হউক অথবা কোন একটী নিয়ত কারণ হইতে উৎপন্ন না হউক—এইরূপ আপত্তি হইবে। [ পূঃ ] পাষাণাদিতে গন্ধ না থাকায় গন্ধবত্ত্ব লক্ষণটী অব্যাপ্ত—ইহা বলিতে পার না। কারণ পাষাণাদিতেও গন্ধ আছে অর্থাৎ পৃথিবীত্বহেতু দ্বারা

## বিবৃতি

পৃথিবী গন্ধের সমবায়ী কারণ। সুতরাং গন্ধ সমবায়িকারণতা পৃথিবীতেই আছে। পৃথিবীগত এই গন্ধসমবায়িকারণতা পৃথিবীত্ব দ্বারা অবচ্ছিন্ন। যদি ঐ সমবায়িকারণতাটী পৃথিবীত্ব দ্বারা অবচ্ছিন্ন না হইত, তবে গন্ধকার্য্য আকস্মিক হইয়া পড়িত, কোন নির্দিষ্ট দ্রব্য হইতে ঐ গন্ধের উৎপত্তি হইত না। কারণ কোন নির্দিষ্ট দ্রব্যেই ঐ ঐ গন্ধের সমবায়িকারণতা নাই বলিয়া কোন নির্দিষ্ট দ্রব্যই ঐ গন্ধের সমবায়ী কারণ নহে। এই অভিপ্রায়ে বিশ্বনাথ বলিলেন—**গন্ধত্বাবচ্ছিন্নস্যাকস্মিকত্বাপত্তেঃ।**

পৃথিবীত্ব গন্ধসমবায়িকারণতার অবচ্ছেদক হইলে পৃথিবীতেই গন্ধসমবায়িকারণতা থাকিবে, অন্যত্র থাকিবে না। কারণ অবচ্ছেদক ধর্ম যেখানে থাকে, অবচ্ছেদ্যও সেইখানে থাকে। অবচ্ছেদক পৃথিবীত্ব যখন পৃথিবীতে আছে, তখন অবচ্ছেদ্য গন্ধসমবায়িকারণতাও পৃথিবীতেই থাকিবে। তাহা হইলে পৃথিবীই গন্ধসমবায়ী কারণ হইবে এবং তাহা হইতেই গন্ধের উৎপত্তি হইবে। অন্য কোন দ্রব্য হইতে ঐ গন্ধের উৎপত্তি হইবে না বলিয়া গন্ধটীও আকস্মিক হইবে না।

**अनुत्कटत्वेनाप्युपपद्यते, कथमन्यथा तद्भस्मनि गन्ध उपलभ्यते? भस्मनो हि पाषाणध्वंसजन्यत्वात् पाषाणोपादानोपादेयत्वं सिध्यति; यद् द्रव्यं यद्द्रव्य-**

अनुत्कटस्तु विद्यमानोऽपि नोपलभ्यत इति भावः। ननु पाषाणादीनामपृथिवीत्वात् तत्र गन्धानुपलब्धिरिति चेत्। तत्राह—**कथमि**ति। **अन्यथा**—पाषाणादौ पृथिवीत्वानङ्गीकारे। **तद्**भस्मनि पाषाणादिभस्मनि। तथा च पाषाणभस्मनि गन्धः प्रत्यक्षसिद्धः, तेन तत्र पृथिवीत्वमङ्गीकरणीयम्। ततश्च पाषाणभस्मारम्भकावयवेष्वपि पृथिवीत्वसिद्धिः। य एव भस्मारम्भकावयवास्त एव पाषाणारम्भकावयवास्ततश्च पाषाणारम्भकावयवानां पृथिवीत्वसिद्धौ तज्जन्य-पाषाणस्यापि पृथिवीत्वसिद्धिस्तेन च पृथिवीत्वेन तत्र गन्धसिद्धिरिति भावः। ननु भवेदेतदेवं, यदि भस्मारम्भकावयव-पाषाणारम्भकावयवयोरैक्यं स्यात्। तदेव नाद्यापि सिद्धमतस्तयोरैक्यं साधयति—**भस्मनो** हीति। **पाषाणोपादानोपादेयत्व**मिति। पाषाणस्य यदुपादानम् आरम्भकोऽवयवः तस्योपादेयत्वं कार्यत्वमित्यर्थः। अनुमान-प्रयोगश्चायम्—पाषाणभस्म तदुपादानोपादेयं तदद्रव्यध्वंसजन्यत्वात्, महापटध्वंसजन्य-खण्ड-पटवत्। अस्मिन्ननुमाने व्याप्तिं दर्शयति—**यद्द्रव्य-**

পাষাণাদিতে গন্ধের অনুমিতি হয়। অনুপলব্ধি কিন্তু অনুৎকট বলিয়াই উপপন্ন হইবে অর্থাৎ উৎকট গন্ধেরই প্রত্যক্ষ হয়। পাষাণাদির গন্ধ থাকিলেও উৎকট নহে বলিয়া প্রত্যক্ষ হয় না; কিন্তু অনুমিত হয়। অন্যথা অর্থাৎ পাষাণকে পৃথিবী বলিয়া স্বীকার না করিলে পাষাণভস্মে গন্ধের উপলব্ধি (প্রত্যক্ষ) হয় কিরূপে? পাষাণ-ধ্বংস হইতে পাষাণ-ভস্মের উৎপত্তি হয় বলিয়া পাষাণভস্মের, পাষাণের উপাদানের (পাষাণের আরম্ভক অবয়বের) উপাদেয়ত্ব (কার্য্যত্ব) সিদ্ধ হয়।

**বিবৃতি**

পাষাণে গন্ধ নাই বলিয়া প্রত্যক্ষ হয় না, ইহা বলা যায় না। কারণ পাষাণ পৃথিবী। পৃথিবী হইলেই গন্ধ থাকিবে। পাষাণ যদি পৃথিবী না হইত, তবে পাষাণভস্মে (চূণে) গন্ধ প্রত্যক্ষ হইত না। কিন্তু পাষাণভস্মে গন্ধ প্রত্যক্ষসিদ্ধ? সুতরাং উহাকে এবং উহার অবয়বকে পৃথিবী বলিয়া স্বীকার করিতে হইবে। পাষাণভস্ম ও পাষাণের আরম্ভক অবয়ব এক; কারণ পাষাণভস্ম পাষাণধ্বংস হইতেই উৎপন্ন হয়। যে দ্রব্যটী যে দ্রব্যের ধ্বংস হইতে উৎপন্ন হয়, সে দ্রব্যটী তাহার উপাদান হইতেই উৎপন্ন হয়—ইহাই নিয়ম। তাই বিশ্বনাথ বলিলেন—**যদ্ দ্রব্যং যদ্দ্রব্যধ্বংসজন্যম্** ইত্যাদি। পাষাণভস্ম পাষাণের উপাদানের উপাদেয় (কার্য্য)

**ध्वंस-जन्यं, तत् तदुपादानोपादेयमिति व्याप्तेः, दृष्टश्चैतत् खण्डपटे महापटध्वंस-**मिति। अस्यायमर्थः—यद् द्रव्यं भस्मादि-द्रव्यं यद्द्रव्यध्वंस-जन्यं पाषाणादिद्रव्य-ध्वंसजन्यं, तत् भस्मादिद्रव्यं तदुपादानोपादेयं पाषाणादिद्रव्यस्य यदुपादानमारम्भकावयवस्तस्योपादेयं कार्यमिति। उपादेयता चात्र साक्षात्परम्परा साधारणी बोध्या। अत्र च घटद्रव्यध्वसजन्ये धटध्वंसप्रत्यक्षे घटरूपध्वंसे वा घटोपादानानुपादेये व्यभिचारवारणाय प्रथमं **द्रव्य**पदम्। तेन घटध्वंसप्रत्यक्षस्य घटरूपध्वंसस्य वा द्रव्यत्वाभावान्न व्यभिचारः। यद्ध्वंसजन्यमित्युक्तौ मिथ्याज्ञानवासनाध्वंसजन्ये तादृश-वासनोपादानानुपादेये कायव्यूहे व्यभिचारः, तद्वारणाय द्वितीयं—**द्रव्य**पदम्। यद् द्रव्यं यद्द्रव्याभावजन्यमित्युक्तौ प्रतिबन्धकद्रव्याभावजन्ये द्रव्ये व्यभिचारस्तद्द्रव्यस्य प्रतिबन्धकद्रव्योपादानानुपादेयत्वादतस्तद्व्यभिचारवारणाय—**ध्वंस**पदम्। न च प्रतिबन्धकद्रव्यध्वंसजन्ये द्रव्ये व्यभिचार इति वाच्यम्। प्रतिबन्धकसंसर्गाभावत्वेन प्रतिबन्धकद्रव्यध्वंसस्य जनकत्वात्। इह तु ध्वंसत्वेन जनकत्वं विवक्षितं, तेन तत्र न व्यभिचारः। न च दुग्धध्वंसजन्ये स्थूलदध्नि व्यभिचार इति वाच्यम्। स्थूलदध्नस्त्र्यणुकादिरूप-स्थूलदधिजन्यत्वेन दुग्धध्वंसजन्यत्वानभ्युपगमात्। त्र्यणुकदध्नो द्व्यणुकरूप-दुग्धध्वंसजन्यत्वेऽपि न तत्र व्यभिचारः, तदुपादानोपादेयत्वस्य त्र्यणुकदध्नि सत्त्वात्, तस्य च द्व्यणुकोपादान-परमाणुजन्यत्वात्। न च दुग्धपरमाणुजन्यत्वेन त्र्यणुकदध्नो दुग्धत्वापत्तिरिति वाच्यम्। द्रव्यत्वव्याप्य-व्याप्यजातेः परमाणुवृत्तित्वे मानाभावेन दुग्धपरमाणौ दुग्धत्वाभावात्। व्याप्तिग्रहणस्थलं दृष्टान्तमाह —**दृष्ट**मिति। **एतस्य** द्रव्यध्वंसजन्य-द्रव्यस्य द्रव्योपादानोपादेयत्वम्। **खण्डपट** इति। महापटध्वंसजन्यस्य खण्डपटस्य महापटोपादान-तन्तूपादेयत्वं यथा दृश्यते, पाषाणध्वंस-

কারণ নিয়ম (ব্যাপ্তি) আছে যে—যে দ্রব্যটী যে দ্রব্যের ধ্বংস-জন্য, সেই দ্রব্যটী সেই দ্রব্যের উপাদানের উপাদেয়। বৃহৎ বস্ত্রের ধ্বংস-জন্য ক্ষুদ্র বস্ত্রে এইরূপ নিয়ম

**বিবৃতি**

হইলে উভয়ের উপাদান এক হইবে। পাষাণভস্ম গন্ধবান্ বলিয়া পৃথিবী হইলে তাহার উপাদানও পৃথিবী হইবে এবং তদুৎপন্ন পাষাণও পৃথিবী হইবে। উহা পৃথিবী না হইলে পাষাণভস্মে গন্ধ প্রত্যক্ষ হইত না। অতএব পাষাণ যে গন্ধবিশিষ্ট, ইহা অনুমানসিদ্ধ। কিন্তু ঐ গন্ধ অনুৎকট বলিয়া প্রত্যক্ষ হয় না। তাই বিশ্বনাথ বলিলেন—**অনুপলব্ধিস্ত্বনুৎকটত্বেনাপ্যুপপদ্যতে।**

जन्ये। इत्थञ्च पाषाणपरमाणोः पृथिवीत्वात् तज्जन्य-पाषाणस्यापि पृथिवीत्वं, तथा च तस्यापि गन्धवत्त्वे बाधकाभावः।

नानारूपेति। शुक्ल-नीलादि-भेदेन नानाजातीयं रूपं पृथिव्यामेव वर्त्तते, न तु जलादौ, तत्र शुक्लस्यैव सत्त्वात्। पथिव्यान्त्वेकस्मिन्नपि धर्मिणि पाकवशेन

जन्यस्यापि पाषाणोपादानोपादेयत्वं सिध्यतीति भावः। **इत्थ**मिति। उक्तव्याप्त्या पाषाणस्य भस्मारम्भक-परमाण्वभिन्न-परमाण्वारब्धत्वसिद्धावित्यर्थः। **तज्जन्य**पाषाणस्यापि पाषाणपरमाणुजन्य-पाषाणद्व्यणुकस्यापि। **तस्यापि** पाषाणद्व्यणुकस्यापि। **बाधकाभाव** इति। तेषामुक्तयुक्त्या पृथिवीत्वसिद्धौ तेन पृथिवीत्वेन तत्र गन्धानुमानमिति भावः।

गुणवत्त्वेन पृथिव्या द्रव्यत्वे सिद्धे पृथिवीत्वव्यवस्थाहेतून् गुणान् प्रशस्तपादभाष्य-मनुस्मरन्नाह—**नाने**तीति। क्षितावेव नानाविधं रूपं वर्त्तते, न द्रव्यान्तरे। तेन नाना-रूपसमवायः पृथिवीत्वव्यवस्थाहेतुरित्युक्तं भवति। ननु नित्यानित्यभेदेनाऽनेकविधं रूपं जलादावप्यस्तीत्यत आह—**शुक्लनीला**दिभेदेनेति। आदिपदेन पीत-रक्त-हरित-कपिश-चित्ररूप-परिग्रहः। ननु नीलं जलं, पीतं जलमित्यादि-प्रतीतेर्जलेऽपि नानारूपवत्त्वं स्वीकार्यमिति चेत्। न। जलस्य हि नीलपीतादिपृथिवीसंयोगादौपाधिकं नानारूपवत्त्वं, न तु स्वाभाविकमित्याह—**न तु** जलादाविति। ननु कथमनेकविधं रूपं पृथिव्याम्? सर्वावच्छेदेनैकस्यैव रूपस्यानुभवादित्यत आह—**पाक**वशेनेति। रूपपरावृत्तिफलक-तेजसंयोगः **पाकः**। एकदैकत्र नानारूपाभावेऽपि पाकवशेन क्रमेण शुक्लशुक्लतराद्यनेकरूपं पृथिव्यामेव सम्भवति न जलादौ। तत्र हि शुक्लरूपसत्त्वेऽपि तत्र नावान्तरतारतम्यमस्ति, पृथिवीसंयोगात् तथाप्रतिभास इति भावः। अव्याप्तिमाशङ्कते—**न च यत्रे**ति।

( ব্যাপ্তি ) দেখা যায়। এইরূপে পাষাণ-পরমাণু পৃথিবী [হয়] বলিয়া পাষাণ-পরমাণু হইতে উৎপন্ন পাষাণেরও পৃথিবীত্ব সিদ্ধ হয় অর্থাৎ ভস্ম পাষাণোপাদানের উপাদেয় হইলে ভস্মের আরম্ভক অবয়ব এবং পাষাণের আরম্ভক অবয়ব এক হয়। ভস্মারম্ভক অবয়ব পৃথিবী হইলে পাষাণের আরম্ভক অবয়বও পৃথিবী হইবে এবং তাহার দ্বারা আরব্ধ পাষাণও পৃথিবী হইবে। তাহা হইলে আর পাষাণেরও গন্ধবত্ত্বে কোন বাধক নাই। **নানা রূপবতী** ইত্যাদি গ্রন্থের অর্থ—শুক্ল, নীল, পীত প্রভৃতি বিবিধ রূপ পৃথিবীতেই থাকে, জলাদিতে কিন্তু [ এই সমস্ত রূপ ] থাকে না। কারণ সেখানে শুক্ল রূপই থাকে। পৃথিবীস্বরূপ এক ধর্ম্মীতেই

**षड्विधस्तु रसस्तत्र गन्धस्तु द्विविधो मतः ॥ ३५**

नानारूपसम्भवात्। न च यत्र नानारूपं नोत्पन्नं, तत्राऽव्याप्तिरिति वाच्यं, रूपद्वयवद्वृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, रूपनाशवद्वृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वस्य वा वाच्यत्वात्। वैशेषिक-नये पृथिवीपरमाणौ रूपनाशस्य रूपान्तरस्य च सत्त्वात्, न्याय-नये घटादावपि तत्सत्त्वाल्लक्षणसमन्वयः।

षड्विध इति। मधुर-कटु-कषायादि-भेदेन यः षड्विधो रसः, स पृथिव्या-

परिहारमाह—**रूपद्वये**ति। रूपद्वयवान् पटादिस्तद्वृत्तिर्द्रव्यत्वव्याप्या जातिः पृथिवीत्वं, तादृशजातिमत्त्वं नानारूपवत्त्वपदेन विवक्षितम्। तच्च नानारूपरहितेष्वपि घटादिषु वर्त्तत एवेति नाव्याप्तिः। रूपद्वयवद्वृत्तिजातिमत्त्वमित्युक्तौ रूपद्वयवतपटादिवृत्ति-सत्ता-जातेर्गुणादावपि सत्त्वादतिव्याप्तिः, तद्वारणायाह—**द्रव्यत्व**व्याप्येति। द्रव्यत्वव्याप्य-जातिमत्त्वमित्युक्तौ जलादावतिव्याप्तिर्द्रव्यत्वव्याप्य-जलत्वजातेस्तत्र सत्त्वादत आह—**रूपद्वय**वद्वृत्तीति। द्रव्यत्वव्याप्य-जलपृथिव्यन्यतरत्वमादाय जलादावतिव्याप्तिस्तद्वारणायाह—**जाती**ति। रूपनिष्ठं द्वित्वं न संख्यारूपं, गुणे गुणानङ्गीकारात्; अपि तु रूपद्वयविषयकापेक्षाबुद्धिविषयत्वरूपं वक्तव्यमिति गौरवमतो लाघवादाह—**रूपनाशे**ति। अत्रापि प्रतिपदव्यावृत्तिः पूर्ववद् बोध्या। नानारूपवत्त्वपदस्य रूपनाशवद्वृत्ति-द्रव्यत्वव्याप्यजातिमत्त्वार्थकत्वे साधर्म्यलक्षणं योजयति—**वैशेषिके**ति। **कषाया**दीत्यादिपदेना-

কিন্তু পাকবশে নানা রূপ সম্ভব হইয়া থাকে। [ পূঃ ] যে পৃথিবীতে নানারূপ উৎপন্ন হয় নাই, সেই পৃথিবীতে [ নানারূপবত্ত্ব লক্ষণের ] অব্যাপ্তি হয়—ইহা বলিতে পার না। কারণ [ এস্থলে নানারূপবত্ত্ব শব্দের ] রূপদ্বয়বদ্‌বৃত্তিদ্রব্যত্বব্যাপ্য-জাতিমত্ত্ব [ অর্থ ] বিবক্ষিত হইয়াছে অর্থাৎ রূপদ্বয়-বিশিষ্ট যে যে পদার্থ, তাহাতে বৃত্তি (বিদ্যমান) যে দ্রব্যত্বব্যাপ্য জাতি পৃথিবীত্ব, সেই পৃথিবীত্ব জাতিমত্ত্বই নানারূপবত্ত্ব শব্দের অর্থ। অথবা [ নানারূপবত্ত্ব শব্দের অর্থ— ] রূপনাশবদ্‌বৃত্তি-দ্রব্যত্বব্যাপ্যজাতিমত্ত্ব বলিতে হইবে অর্থাৎ রূপনাশ-বিশিষ্ট যে যে পদার্থ, সেই পদার্থে বিদ্যমান যে দ্রব্যত্বব্যাপ্য জাতি, সেই জাতিমত্ত্বই নানারূপবত্ত্ব শব্দের অর্থ। বৈশেষিকমতে পৃথিবীর পরমাণুতে রূপনাশ ও রূপান্তর থাকায়, ন্যায়মতে ঘটাদিতেও উহা থাকায় লক্ষণসঙ্গতি হয়।

**ষড়্‌বিধস্তু** ইত্যাদি গ্রন্থের অর্থ—মধুর, অম্ল, কটু, কষায়াদি ভেদে যে ছয়টী রস,

**स्पर्शस्तस्यास्तु विज्ञेयो ह्यनुष्णाशीत-पाकजः ।**

**मेव । जले च मधुर एव रसः । अत्रापि पूर्ववद् रसद्वयवद्वृत्तिद्रव्यत्वव्याप्यजाति-मत्त्वं लक्षणार्थोऽवसेयः । द्विविध इति वस्तुस्थितिमात्रं, न तु द्विविध-गन्धवत्त्वं लक्षणं ; द्विविधत्वस्य व्यर्थत्वात् । द्वैविध्यञ्च सौरभासौरभ-भेदेन बोध्यम् ॥३५**

**स्पर्श इति । तस्याः पृथिव्याः । अनुष्णाशीत-स्पर्शवत्त्वं वायोरपि वर्त्तत इत्युक्तं—पाकज इति । इत्थञ्च पृथिव्याः स्पर्शोऽनुष्णाशीत इति ज्ञापनार्थं तदुक्तम् ।**

ऽम्ल-लवण कटु-कषाय-तिक्तरस-परिग्रहः । यत्र नानारसा नोत्पन्नास्तत्राव्याप्तिरित्यत आह **—अत्रापीति । रसद्वयेति** । अत्रापि प्रतिपद-व्यावृत्तिः पूर्ववद् बोध्या । **लक्षणार्थः** षड्विधरसवत्त्व-लक्षणस्यार्थः । **वस्तु**स्थितीति । •वस्तुगत्या पृथिव्यामेव द्विविधो गन्ध-स्तिष्ठतीति सूचयितुं द्विविध इत्युक्तमित्यर्थः। यत्तु सुगन्धि सलिलं सुरभिः समीरण इति, तत् तदन्तर्गत-पार्थिव-कुसुमाद्यधिवास-निबन्धनम् , तदन्वयव्यतिरेकानुविधानात् , न तु स्वभावत इत्यवधेयम् । **व्यर्थत्वा**दिति । पृथिवी पृथिवीतरभिन्ना द्विविधगन्धवत्त्वादिती-तरभेदानुमितौ द्विविधत्वविशेषणस्य व्यभिचारावारकत्वेन व्यर्थत्वादिति भावः ॥३५॥

তাহা পৃথিবীতেই থাকে। জলে কিন্তু মধুর রসই থাকে। এখানেও পূর্ব্বের ন্যায় রসদ্বয়বদ্‌বৃত্তি দ্রব্যত্বব্যাপ্য জাতিমত্ত্বই [ ষড়্‌বিধরসবত্ত্ব ] লক্ষণের অর্থ বুঝিতে হইবে অর্থাৎ রসদ্বয়বিশিষ্ট যে যে পৃথিবী, সেই পৃথিবীতে বৃত্তি যে দ্রব্যত্বব্যাপ্য জাতি, সেই জাতিমত্ত্বই ষড়্‌বিধরসবত্ত্বলক্ষণের অর্থ। দ্বিবিধ এইটী বস্তুস্থিতিমাত্র অর্থাৎ বস্তুতঃ পক্ষে পৃথিবীতে দুই প্রকার গন্ধ থাকে—ইহা বুঝাইবার জন্য দ্বিবিধ বলা হইয়াছে। দ্বিবিধগন্ধবত্ত্ব কিন্তু পৃথিবীর লক্ষণ নহে। কারণ দ্বিবিধত্ব [ বিশেষণটী ] ব্যর্থ। সৌরভ ( সুগন্ধ ) ও অসৌরভ ( দুর্গন্ধ ) ভেদে গন্ধ দ্বিবিধ জানিবে ॥৩৫॥

**স্পর্শস্তস্যাঃ** ইত্যাদি গ্রন্থের **তস্যাঃ** শব্দের অর্থ—পৃথিবীর। অনুষ্ণ ও অশীত স্পর্শ বায়ুতেও থাকে ; এইজন্য [ স্পর্শের বিশেষণরূপে ] **পাকজ**—ইহা উক্ত

**বিবৃতি**

লক্ষণরূপ হেতু দ্বারা লক্ষ্যে অলক্ষ্য সকল পদার্থের ভেদ অনুমিত হয়। দ্বিবিধগন্ধবত্ত্ব পৃথিবীর লক্ষণ হইলে উহাই পৃথিবীতে ইতরভেদের অনুমিতির হেতু হইবে। যেমন—পৃথিবী পৃথিবীতরভিন্না দ্বিবিধগন্ধবত্ত্বাৎ। কিন্তু গন্ধের দ্বিবিধত্বরূপ বিশেষণটী হেতুতে ব্যভিচারের নিবর্ত্তক না হওয়ায় ব্যর্থ। হেতু ব্যর্থ বিশেষণঘটিত হইলে ব্যাপ্যত্বাসিদ্ধি নামক হেত্বাভাস হয়। তাই বলিলেন—**দ্বিবিধত্বস্য ব্যর্থত্বাৎ** ॥৩৫॥

**वस्तुतस्तु पाकजस्पर्शवत्त्वमात्रं लक्षणम्, अधिकस्य वैयर्थ्यात्। यद्यपि पाकज-**

ननु पृथिव्याः स्पर्शस्य पाकजत्वे किं मानम्? यथा हि शुक्लरूपवति तेजःसंयोगे कृष्णादि दृश्यते, अम्लादिरसवति मधुरादि, सुरभावसौरभं, नैवं पृथिव्यां पूर्वस्पर्शविजातीयः स्पर्शः, अनुष्णाशीतस्यैव तत्र विद्यमानत्वादित्याशङ्कामपनिनीषन्नेवोक्तवान्—**पाकज इति**। तेजःसंयोगासमवायिकारणक इत्यर्थः। लक्षणेऽनुष्णाशीतत्वस्य वैयर्थ्यादाह— **इत्थं** चेति। पाकजस्पर्शवत्त्वमात्रोक्तौ चेत्यर्थः। पृथिव्या गन्ध-रूप-रसानां पाकजत्वं सदपि स्फुटत्वान्नोक्तम्। स्पर्शस्य तु तथात्वे विप्रतिपत्तिरिति तदेव स्पष्टतयोक्तम्। अयम्भावः—यदि हि पृथिव्याः स्पर्शः पाकजो न स्यात्, संख्यापरिमाणादिवदविशिष्टो दुःखविशेषादिप्रयोजक-वैजात्य-रहितः स्यात्। तथा चाशीविष-वृश्चिक-कीट-पतङ्गादि-दंशेषु शूक-शिम्बि-वृश्चिक-पत्रिकादिषु च संस्पृष्टेषु दृष्टो दुःखविशेषो नोपपद्येत। मणि-मूलादि-विशेषेषु स्पृष्टेषु तदुपशमो वा न स्यात्। गवादि चाण्डालादि-स्पर्श-विधिनिषेधौ च न स्याताम्। दर्शन-स्पर्शन-घ्राणास्वादनभेदेन मातङ्ग-मदिरादिषु प्राय-श्चित्तभेदो न स्यात्, द्रव्यस्यैकरूपत्वात्। तस्मात् पार्थिवस्पर्शोऽपि पार्थिवविशेषगुण-

হইয়াছে। এইরূপ অর্থাৎ পাকজস্পর্শবত্ত্বমাত্র পৃথিবীর লক্ষণ বলিলে যদিও অতিব্যাপ্তি হয় না, তথাপি পৃথিবীর স্পর্শ অনুষ্ণ ও অশীত—ইহাই জ্ঞাপন করিতে [ স্পর্শের বিশেষণরূপে ] তাহা অর্থাৎ অনুষ্ণাশীত উক্ত হইয়াছে। বস্তুতঃপক্ষে পাকজ স্পর্শবত্ত্ব-মাত্রই পৃথিবীর লক্ষণ। কারণ অতিরিক্ত [ অনুষ্ণাশীতত্বরূপ বিশেষণ ] ব্যর্থ। যদিও

**বিবৃতি**

পৃথিবীতে পাকজন্য পূর্ব্ববর্ত্তী রূপ, রস ও গন্ধের নাশ এবং অন্যজাতীয় রূপ, রস ও গন্ধের উৎপত্তি সকলেরই সুবিদিত। কিন্তু পাকজন্য স্পর্শের ভেদ পরিস্ফুট নহে। কারণ পাকে রূপাদির পরিবর্ত্তন যেরূপ দেখা যায়, স্পর্শের সেরূপ পরিবর্ত্তন দেখা যায় না। বস্তুতঃ পৃথিবীর স্পর্শ পাকজ না হইলে সংখ্যা বা পরিমাণাদির ন্যায় বিভিন্ন পৃথিবীর স্পর্শে কোন বৈশিষ্ট্য থাকিত না। সমস্ত স্পর্শ একরূপ হইলে সর্প ও বৃশ্চিকের দংশনে, শুঁয়া পাতা ও বিছুটী পাতার স্পর্শে দুঃখের ভেদ উপলব্ধ হইত না এবং গাভী ও চাণ্ডালাদির স্পর্শে, মদ্যাদির স্পর্শে ও পানে বিধিনিষেধের ভেদ বা প্রায়শ্চিত্তের ভেদ হইত না। সুতরাং স্বীকার করিতে হইবে পৃথিবীর স্পর্শ পাকজ। পাকে ঐ স্পর্শ অন্য জাতীয় হয়। পৃথিবীর স্পর্শের এই বৈশিষ্ট্য প্রকাশ করিতে বলিলেন—**পাকজস্পর্শবত্ত্বমাত্রং তু লক্ষণম্** ॥৩৬॥

**नित्यानित्या च सा द्वेधा नित्या स्यादणुलक्षणा ॥ ३६**

**अनित्या तु तदन्या स्यात् सैवावयवयोगिनी ।**

**स्पर्शः पटादौ नास्ति, तथापि पाकजस्पर्शवद्वृत्ति-द्रव्यत्वव्याप्य-जातिमत्त्वमर्थो बोध्यः । नित्येति । सा पृथिवी द्विविधा नित्यानित्या चेत्यर्थः । अणुलक्षणा परमाणुरूपा पृथिवी नित्या ॥ ३६**

**तदन्या परमाणुभिन्ना पृथिवी द्व्यणुकादिरूपा सर्वाऽप्यनित्येत्यर्थः । सैवाऽनित्या पृथिव्यवयववतीत्यर्थः । ननु अवयविनि किं मानम् ? परमाणुपुञ्जैरेवो-**

त्वाद् गन्धवत् पाकज इत्यवधेयम् । **अधिकस्य**—अनुष्णाशीतस्य । ननु न्यायमते पटाद्यवयविनि नैव पाकः, पाकेन पटादीनां नाशापत्तेः । वैशेषिकमते तु परमाणुष्वेव पाकः, नावयविनि पटादाविति भागासिद्धिमाशङ्क्य परिहरति—**यद्यपी**ति । **पटा**दावित्यादिपदेन वैशेषिकमतेऽवयविमात्रपरिग्रहः । **पाकज**स्पर्शवदिति । पाकजस्पर्शवन्तो ये घटाद्याः परमाणवो वा, तद्वृत्तिर्द्रव्यत्वव्याप्या जातिः पृथिवीत्वं, तादृशजातिमत्त्वं पाकजस्पर्शवत्त्वपद-विवक्षितमिति पटादौ नातिव्याप्तिस्तत्र तादृशजातेः सत्त्वादिति भावः । पाकजस्पर्शवद्वृत्ति-जातिमत्त्वमित्युक्तौ सत्ताजातिमादाय गगनेऽतिव्याप्तिरत—**द्रव्यत्व-व्याप्ये**ति । जलत्वादिकमादाय जलादावतिव्याप्तिवारणाय—**पाकजे**ति । पाकजद्रवत्व-वद्वृत्ति द्रव्यत्वव्याप्यतेजस्त्वमादाय तेजस्यतिव्याप्तिवारणाय—**स्पर्शे**ति । जलपृथिव्यन्य-तरत्वमादाय जलादावतिव्याप्तिवारणाय—**जाती**ति । "सा तु द्विविधा नित्या चानित्या चे"ति भाष्यमनुसृत्य मूले पृथिव्या विभागं दर्शयति—**नित्यानित्ये**ति ॥३६॥

लीलावतीप्रकाशमनुस्मरन्नवयवातिरिक्तेऽवयविनि संघातवादि-बौद्धानां विप्रतिपत्तिमवतारयति—**नन्वि**ति । स्थूलो घट इत्यादि-प्रतीतिरेव तत्र प्रमाणमिति चेत्,

পাকজ স্পর্শ পটাদিতে নাই, তথাপি [ পাকজ-স্পর্শবত্ত্ব শব্দের ] পাকজস্পর্শবদ্‌বৃত্তি-দ্রব্যত্বব্যাপ্যজাতিমত্ত্ব অর্থ বুঝিতে হইবে অর্থাৎ পাকজ-স্পর্শবিশিষ্ট যে পৃথিবী, সেই পৃথিবীবৃত্তি যে দ্রব্যত্বব্যাপ্য পৃথিবীত্ব জাতি, সেই পৃথিবীত্ব জাতিমত্ত্বই পাকজস্পর্শবত্ত্ব শব্দের অর্থ। পটাদিতে পাকজস্পর্শ না থাকিলেও পাকজস্পর্শবিশিষ্টপৃথিবীবৃত্তিদ্রব্যত্ব-ব্যাপ্য পৃথিবীত্ব জাতি থাকায় অব্যাপ্তি হয় না। **নিত্যা** ইত্যাদি গ্রন্থের অর্থ—সেই পৃথিবী দ্বিবিধ—নিত্য ও অনিত্য। অণুলক্ষণ ( পরমাণু-স্বরূপ ) পৃথিবী নিত্য ॥৩৬॥

তদ্‌ভিন্ন অর্থাৎ পরমাণুভিন্ন দ্ব্যণুকাদিরূপ যাবতীয় পৃথিবীই অনিত্য—ইহাই

**पपत्तेः। न च परमाणूनामतीन्द्रियत्वाद् घटादीनां प्रत्यक्षं न स्यादिति वाच्यम्। एकस्य परमाणोरप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वसम्भवात्। यथैकस्य केशस्य दूरेऽप्रत्यक्षत्वेऽपि तत्समूहस्य प्रत्यक्षत्वम्। न चैको घटः स्थूल इति बुद्धे-रनुपपत्तिरिति वाच्यम्। एको महान् धान्यराशिरितिवदुपपत्तेः। मैवम्। पर-माणोरतीन्द्रियत्वेन तत्समूहस्यापि प्रत्यक्षत्वायोगात्; दूरस्थकेशस्तु नातीन्द्रियः,**

तत्राह—**परमाणु**पुञ्जैरिति। विलक्षणसंस्थान-विशिष्टैः परमाणुभिरित्यर्थः। **उपपत्तेः** स्थूलो घट इत्यादि-प्रतीतेरुपपत्तेः। तथा च विलक्षणसंस्थानविशिष्ट-परमाणुपुञ्जस्यैव स्थूलो घट इत्यादिप्रतीतिविषयत्वं नावयविन इति तत्प्रतीतिस्तत्र न प्रमाणमिति भावः। ननु विलक्षण-संस्थानविशिष्ट-परमाणुपुञ्जस्य स्थूलघट-स्वरूपत्वे तत्प्रत्यक्षं न स्यात्, परमाणोर-तीन्द्रियत्वादिति शङ्कते—**न चे**ति। **घटादी**नां विलक्षणसंस्थान-विशिष्ट-परमाणुसमूहा-त्मकानाम्। **प्रत्यक्षं** न स्यादिति। परमाणोरतीन्द्रियत्वेन तत्समूहस्याप्यतीन्द्रियत्वादिति भावः। **तत्**समूहस्य परमाणुसमूहस्य। तत्र दृष्टान्तमाह—**यथे**ति। **अनुप**पत्तिरिति। परमाणूनामनेकत्वादणुत्वाच्चैकत्व-स्थौल्ययोरयोगात् तथाप्रतीत्यनुपपत्तिरिति भावः। **इति**वदुपपत्तेरिति। यथा धान्यसमूहस्यैकत्वादेक इति प्रतीतिः, धान्यानां परस्परसंयोग-विशेषस्यैव महत्त्वात्मकतया महानिति प्रतीतिस्तथा परमाणुपुञ्जेष्वपि पुञ्जस्यैकत्वादेक इति परस्परसंयोगस्यैव महत्त्वाद् महानिति प्रतीतिरिति भावः। लीलावत्याः पृथिवी-ग्रन्थमनुसृत्य परिहारमाह—**मैव**मिति। **प्रत्यक्ष**त्वायोगादिति। स्वभावतोऽयोग्यानां

[ কারিকার প্রথম পাদের ] অর্থ। সেই অনিত্য পৃথিবী অবয়ব বিশিষ্ট (অবয়বী)—ইহাই [ কারিকার দ্বিতীয় পাদের ] অর্থ। [পূঃ] অবয়বীতে কি প্রমাণ? অর্থাৎ অবয়ব ব্যতীত অবয়বীর সত্তাতে কোন প্রমাণ নাই। কারণ পরমাণুপুঞ্জের দ্বারাই [ অয়ং ঘটঃ এইরূপ অবয়ব প্রতীতির ] উপপত্তি (নির্ব্বাহ) হইতে পারে। পরমাণুগুলি অতীন্দ্রিয় বলিয়া [ পরমাণুপুঞ্জরূপ ] ঘটাদির প্রত্যক্ষ না হউক, ইহা বলা যায় না। কারণ একটী পরমাণু অপ্রত্যক্ষ হইলেও পরমাণুসমূহের প্রত্যক্ষত্ব সম্ভব হইতে পারে। যেমন দূরবর্ত্তী একটী কেশ প্রত্যক্ষ না হইলেও কেশগুচ্ছের প্রত্যক্ষ হয়। আর "একো ঘটঃ স্থূলঃ" অর্থাৎ ঘটটী এক এবং স্থূল—এইরূপ প্রতীতির অনুপপত্তি হয়—ইহাও বলিতে পার না। কারণ "একো মহান্ ধান্যরাশিঃ" অর্থাৎ একটী বিশাল ধান্যরাশি—এইরূপ প্রতীতির মত উপপন্ন হইবে। [ উঃ ] না—এরূপ বলিতে পার না। কারণ [ প্রত্যেক ] পরমাণু [ স্বভাবতঃ ] অতীন্দ্রিয়—প্রত্যক্ষের অযোগ্য

**सन्निधाने तस्यैव प्रत्यक्षत्वात्। न च तदानीं दृश्यपरमाणुपुञ्जस्योत्पन्नत्वान्न प्रत्यक्षत्वेऽपि विरोध इति वाच्यम्। अदृश्यस्य दृश्यानुपादानत्वात्; अन्यथा चक्षुरुष्मादिसन्ततेः कदाचिद् दृश्यत्वप्रसङ्गात्। न चातितप्ततैलादौ कथमदृश्य-दहन-सन्ततेर्दृश्यदहनोत्पत्तिरिति वाच्यम्। तत्र तदन्तःपातिभिर्दृश्यदहनावयवैः स्थूलदहनोत्पत्तेरुपगमात्। न चाऽदृश्येन द्व्यणुकेन कथं दृश्यत्रसरेणोरुत्पत्तिरिति वाच्यम्। यतो न दृश्यत्वमदृश्यत्वं वा कस्यचित् स्वभावादाचक्ष्महे, किन्तु**

परमाणूनां परस्परसंयोगमात्रेण योग्यत्वं न सम्भवति। अन्यथा पिशाचादीनामपि परस्पर-संयुक्तानां प्रत्यक्षत्वापत्तेरिति भावः। **तस्यै**वेति। एवकारश्च सन्निधानपदेनाऽन्वेति। **तस्य**—दूरस्थकेशस्य। **प्रत्यक्ष**त्वादिति। सन्निधाने दूरत्वरूप-प्रतिबन्धकाभावादिति भावः। **तदानीं** स्थूलो घट इत्याकारक-प्रत्यक्षपूर्वम्। **उत्पन्न**त्वादिति। क्षणभङ्गवादि-बौद्धैकदेशिनां मते परमाणूनामुत्पत्तिस्वीकारात् तन्मते पूर्वपूर्वव्यक्तिमात्रस्यैवोत्तरोत्तर-व्यक्ति-हेतुताया अङ्गीकारादादृश्यपरमाणुपुञ्जाद् घटाद्यात्मकस्य दृश्यपरमाणुपुञ्जस्योत्पत्ति-रिति भावः। **अदृश्यस्य** अदृश्यपरमाणुपुञ्जस्य। **दृश्यानु**पादानत्वात् दृश्याहेतुत्वात्। प्रतिक्षणमुत्पद्यमाना परमाणुपुञ्जात्मका घटादयो दृश्यन्ते, चक्षुराद्यात्मकास्तु प्रतिक्षण-मुत्पद्यमाना अपि न दृश्यन्ते। अतो दृश्यस्य दृश्योपादानत्वमदृश्यस्यादृश्योपादानत्वं वक्तव्यम्, न त्वदृश्यस्य दृश्योपादानत्वमिति भावः। **अन्यथा** अदृश्यस्य दृश्योपादानत्वे। **दृश्यत्व**प्रसङ्गादिति। यैरदृश्यपरमाणुपुञ्जैरदृश्यस्य चक्षुरादेरुद्भवस्तैः कदाचि-च्चक्षुराद्यात्मक-दृश्यपरमाणुपुञ्जोद्भवसम्भवादिति भावः। **तत्र** तादृशदहनोत्पत्तिस्थले

বলিয়া পরমাণুসমূহও প্রত্যক্ষের যোগ্য হইতে পারে না। দূরবর্ত্তী কেশ [ স্বভাবতঃ ] অতীন্দ্রিয় নহে, কারণ নিকটে সেই কেশেরই প্রত্যক্ষ হইয়া থাকে। [ পূঃ ] সেই সময় অর্থাৎ ঘটের প্রত্যক্ষের পূর্ব্বে [ অদৃশ্য পরমাণুপুঞ্জ হইতে ] দৃশ্য ( প্রত্যক্ষ পরমাণুপুঞ্জের উৎপত্তি হওয়ায়, উহার প্রত্যক্ষে কোনও বিরোধ নাই—ইহা বলিতে পার না; কারণ অদৃশ্য দৃশ্যের উপাদান হয় না। অন্যথা অর্থাৎ অদৃশ্য বস্তু দৃশ্যের উপাদান হইলে—চক্ষুঃসন্ততি, উষ্মসন্ততি প্রভৃতিরও কদাচিৎ দৃশ্যত্বের আপত্তি হয়। [ পূঃ ] অতিতপ্ত তৈল বা ঘৃতাদির অন্তর্গত অদৃশ্য অগ্নিসন্ততি হইতে কিরূপে দৃশ্য অগ্নির উৎপত্তি হয়, ইহা বলিতে পার না। কারণ অতিতপ্ত তৈলের অন্তর্গত দৃশ্য [সূক্ষ্ম] অগ্নির অবয়ব হইতেই দৃশ্য স্থূল অগ্নির উৎপত্তি স্বীকৃত হইয়াছে [ পূঃ ] অদৃশ্য দ্ব্যণুক দ্বারা কিরূপে দৃশ্য ত্রসরেণুর উৎপত্তি হয়, ইহা বলিতে পার না। কারণ দৃশ্যত্ব

**महत्त्वोद्भूतरूपादि-कारणसमुदायवतो दृश्यत्वं, तदभावे चादृश्यत्वम्। तथा च त्रसरेणोर्महत्त्वात् प्रत्यक्षत्वं, न तु द्व्यणुकादेस्तदभावात्। न हि त्वन्मतेऽपीदं सम्भवति, परमाणौ महत्त्वाभावात्। इत्थं चावयविसिद्धौ तेषामुत्पाद-विनाशयोः प्रत्यक्षसिद्धत्वादनित्यत्वम्। तेषां चावयवधाराया अनन्तत्वे मेरुसर्षपयोरपि साम्यप्रसङ्गः। अतः क्वचिद्विश्रामो वाच्यः। यत्र च विश्रामस्तस्यानित्यत्वेऽ-**

**तदन्तः**पातिभिरतितसवैलान्तःपातिभिः। **स्वभावात्** कारणनैरपेक्ष्यात्, उपादानदृश्यत्वादृश्यत्ववशादिति यावत्। **रूपा**दीत्यादिनाऽऽलोक-सन्निकर्षादि-परिग्रहः। **तदभावे** महत्त्वोद्भूतरूपाद्यभावे। **प्रत्यक्षत्वं** दृश्यत्वम्। **तद**भावाद् महत्त्वाद्यभावात्। **त्वन्मते** बौद्धमते। **इदं** दृश्यत्वम्। यथा मन्मते महत्त्वादिसम्बन्धासम्बन्धाभ्यां दृश्यत्वादृश्यत्वोपपादनं तथा तन्मते न भवितुमर्हति, कारणीभूत-परमाणुपुञ्जेष्विव कार्यभूत-परमाणुपुञ्जेष्वपि महत्त्वाद्यभावादिति भावः। न च परस्पर-विभक्त-परमाणूनां महत्त्वाभावेऽपि परस्परविलक्षण-संयोगरूपस्य महत्त्वस्य द्व्यणुकादावपि सत्त्वाद् दृश्यत्वमिति वाच्यम्। संयोगस्य महत्त्वानभ्युपगमात्, परमाणोरजन्यतया तत्समूहात्मके घटादावुत्पादविनाश-प्रतीतेरनुपपत्तेश्च। **इत्थम**नेन प्रकारेण—घट इत्यादि-प्रतीतिविषयताया अनेकपरमाणुषु कल्पने गौरवेण। **अवयवि**सिद्धौ अवयवातिरिक्तावयविसिद्धौ। प्रपञ्चश्चास्य न्यायसूत्रीय-द्वितीयाध्याय-प्रथमाह्निकस्य भाष्यवार्त्तिकादौ द्रष्टव्यः। **तेषाम**वयविनाम्। **अवयव-**धाराया अवयवप्रवाहस्य। **अनन्तत्वे** क्वचिद् विश्रान्त्यभावे। **मेरु**-सर्षपयोरपीति।

বা অদৃশ্যত্ব কোন পদার্থের স্বাভাবিক ধর্ম্ম—ইহা আমরা স্বীকার করি না। কিন্তু মহত্ত্ব, উদ্ভূত রূপ, আলোকাদি কারণ সমুদায় বিশিষ্ট পদার্থই দৃশ্য আর তাহাদের অভাবে অদৃশ্য হয়। সুতরাং ত্রসরেণুর মহত্ত্ব থাকায় প্রত্যক্ষ হয়, দ্ব্যণুকাদির কিন্তু প্রত্যক্ষ হয় না, কারণ [ তাহাতে ] মহত্ত্ব নাই। আর তোমার মতেও ইহা [ দৃশ্যত্ব ও অদৃশ্যত্ব ব্যবস্থা ] সম্ভব নহে, কারণ পরমাণুতে মহত্ত্ব নাই। এইরূপে অবয়বীর সিদ্ধি হওয়ায় তাহাদের উৎপাদ ও বিনাশ প্রত্যক্ষসিদ্ধ বলিয়া [ তাহারা ] অনিত্য। সেই ঘটাদি অবয়বীর অবয়ব-ধারা (প্রবাহ) অসংখ্য হইলে মেরু (পর্ব্বত) ও সর্ষপের সাম্য প্রসঙ্গও হয় অর্থাৎ সর্ষপের অবয়ব, সেই অবয়বের অবয়ব এবং তাহার অবয়ব—এইরূপ সর্ষপ ও সুমেরুর অবয়ব-ধারার কোন স্থানে শেষ না হইলে সুমেরু পর্ব্বত ও সর্ষপের পরিমাণের কোন তারতম্য থাকিবে না। কারণ পরিমাণের জনক অবয়বগত

**समवेतकार्योत्पत्तिप्रसङ्गात् तस्य नित्यत्वम्। महत्परिमाणतारतम्यस्य गगनादौ विश्रान्तत्वमिवाणुपरिमाणतारतम्यस्यापि क्वचिद् विश्रान्तत्वमस्तीति तस्य परमाणुत्वसिद्धिः। न च त्रसरेणावेव विश्रामोऽस्त्विति वाच्यम्। त्रसरेणुः सावयव-**

अपिशब्दः साम्यप्रसङ्ग इत्युत्तरं योजनीयः। तेन च द्व्यणुकस्य सावयवद्रव्यारब्धत्वे महत्त्वापत्तिः समुच्चीयते। **साम्य**प्रसङ्गः परिमाणतारतम्याभावप्रसङ्गः, परिमाणकारणीभूताया अवयवसंख्याया उभयत्र समानत्वादिति भावः। **अयम्भावः**—उभयोर्मेरुसर्षपयोरवयवविभागे क्रियमाणेऽपि यद्यवयवविभागधारायां विश्रान्तिर्न स्यात्, तदोभयोरवयवानामनन्तत्वेन परिमाणतारतम्यकारणस्यावयवसंख्यातारतम्यस्याभावात् मेरुसर्षपादीनां परिमाणतारतम्याभावप्रसङ्गः। न त्वेवं दृश्यते। तस्मादवयवधारायाः क्वचिद् विश्रान्तिः स्वीकर्त्तव्या। तथा च मूलावयवसंख्यातारतम्याद् मेरुसर्षपादीनां परिमाणतारतम्यमिति भावः। ननु तथापि तद्विभागविश्रामाश्रयस्यावयवस्य नित्यत्वे मानाभाव इत्यत आह—**यत्र त्विति**। **असम**वेतकार्येति। असमवेतभावकार्येत्यर्थः। असमवेतस्यापि ध्वंसकार्यस्योत्पत्तेरभ्युपगमादिति भावः। ननु तद्विभागविश्रामाश्रयस्य तस्यावयवस्य नित्यत्वेऽप्यणुत्वे किं मानमित्याशङ्क्यां निराकुर्वन् तत्रैव युक्त्यन्तरमाह—**महत्**परिमाणेति। पृथिवीकिरणावलीमनुस्मरन् परमाणुसिद्धौ पूर्वपक्षमाह—**न चेति**।

সংখ্যা উভয়ত্রই তুল্য (অনন্ত)। অতএব অর্থাৎ এই আপত্তি বারণের জন্য কোন এক স্থলে সেই অবয়ব-ধারার বিশ্রাম (শেষ) বলিতে হইবে। যেখানে সেই অবয়ব-ধারার শেষ হইবে অর্থাৎ যেটী শেষ অবয়ব হইবে, সেইটী যদি অনিত্য হয়, তবে অসমবেত [ভাব] কার্য্যের উৎপত্তির আপত্তি হয় বলিয়া তাহার নিত্যত্ব [স্বীকার্য্য]। মহৎ পরিমাণের তারতম্য (ন্যূনাধিকভাব) যেমন আকাশ, কাল, দিক্ ও আত্মাতে বিশ্রান্ত অর্থাৎ মহৎ পরিমাণের পরম উৎকর্ষ যেমন এই চারিটীতে শেষ হইয়াছে—সেইরূপ অণুপরিমাণের তারতম্যেরও কোন এক স্থলে অর্থাৎ কোন এক অবয়বে বিশ্রাম (শেষ) আছে বলিয়া তাঁহার (যেখানে অণুপরিমাণের তারতম্যের শেষ, সেই শেষ অবয়ব বস্তুর) পরমাণুত্ব সিদ্ধি হয়? [পূঃ] আচ্ছা, ত্রসরেণুতে সেই অবয়ব-ধারার বিশ্রাম হউক—ইহা বলিতে পার না। কারণ—ত্রসরেণুঃ সাবয়বঃ চাক্ষুষদ্রব্যত্বাৎ ঘটবৎ অর্থাৎ ত্রসরেণু সাবয়ব, যেহেতু উহা চাক্ষুষ দ্রব্য; যেমন ঘট—এইরূপ অনুমান প্রয়োগের দ্বারা ত্রসরেণুর অবয়ব সিদ্ধি হইলে, "ত্রসরেণোরবয়বাঃ (দ্ব্যণুকাঃ) সাবয়বাঃ মহদারম্ভ-

**श्चाक्षुषद्रव्यत्वाद् घटवदित्यनुमानेन तदवयवसिद्धौ, त्रसरेणोरवयवाः सावयवा महदारम्भकत्वात् कपालवदित्यनुमानेन तदवयवसिद्धेः। न चेदमप्रयोजकम्,**

**चाक्षुषे**ति। अत्रात्मनि व्यभिचारवारणाय चाक्षुषपदम्। घटाभावे व्यभिचारवारणाय द्रव्यपदम्। **तदवयव**सिद्धौ त्रसरेण्ववयवस्य द्व्यणुकस्य सिद्धौ। **तदवयव**सिद्धेस्तस्य त्रसरेण्ववयवस्य द्व्यणुकस्यावयवसिद्धेः। **इदं** सावयवत्वसाधकमनुमानद्वयम्। **अप्रयो**-

কত্বাৎ কপালবৎ" অর্থাৎ ত্রসরেণুর অবয়বসমূহ ( দ্ব্যণুক ) সাবয়ব, যেহেতু তাহারা মহত্তের ( মহৎ-পরিমাণ-বিশিষ্ট দ্রব্যের ) আরম্ভক, যেমন কপাল—এইরূপ অনুমান প্রয়োগের দ্বারা ত্রসরেণুর অবয়ব সমূহেরও ( দ্ব্যণুকত্রয়ের ) অবয়ব সিদ্ধি হইয়া থাকে। সাবয়বত্ব সাধক এই অনুমান অপ্রয়োজক অর্থাৎ অনুকূল তর্ক রহিত—

**বিবৃতি**

দুইটী সংযুক্ত পরমাণু হইতে একটী দ্ব্যণুক এবং তিনটী সংযুক্ত দ্ব্যণুক হইতে একটী ত্রসরেণু উৎপন্ন হয়—ইহাই ন্যায়বৈশেষিক সিদ্ধান্ত। সুতরাং পরমাণুতেই অবয়ববিভাগের বিশ্রাম বা শেষ। কিন্তু কোন সম্প্রদায় ত্র্যণুকেই অবয়ববিভাগের বিশ্রাম স্বীকার করিতেন। দীধিতিকারও "পদার্থতত্ত্বনিরূপণে" ত্র্যণুককেই মূলাবয়ব বলিয়াছেন—পরমাণু বা দ্ব্যণুক স্বীকার করেন নাই। তাই বিশ্বনাথ বলিলেন—

**ন চ ত্রসরেণাবেব বিশ্রামোঽস্তু।**

বিশ্বনাথ ত্রসরেণুতে অবয়ব ধারার বিশ্রাম স্বীকার করেন নাই। তিনি ত্রসরেণুর অবয়ব দ্ব্যণুক এবং দ্ব্যণুকের অবয়ব পরমাণুর অনুমান করিয়া ঐ পরমাণুতেই অবয়ব ধারার বিশ্রাম বলিয়াছেন।

ত্রসরেণুঃ সাবয়বঃ চাক্ষুষদ্রব্যত্বাৎ ঘটবৎ—অর্থাৎ যে যে চাক্ষুষ দ্রব্য, সে সাবয়ব; যেমন ঘট। এই ত্রসরেণুও যখন চাক্ষুষ দ্রব্য, তখন সেও সাবয়ব—এই অনুমানের দ্বারা ত্রসরেণুর যে অবয়ব সিদ্ধি হয়, সেই অবয়বই দ্ব্যণুক। তিনটী দ্ব্যণুক পরস্পর সংযুক্ত হইলেই ত্রসরেণু উৎপন্ন হয়। কিন্তু যদি কাহারও এই অনুমিতির হেতু চাক্ষুষদ্রব্যত্বে সাবয়বত্বের ব্যভিচার সন্দেহ হয়—ত্রসরেণুটী চাক্ষুষ দ্রব্য হউক, কিন্তু সাবয়ব না হউক—নিরবয়ব হউক—এইরূপ যদি মনে হয়, তবে ঐ ব্যভিচার শঙ্কার নিবৃত্তির জন্য এস্থলে এইরূপ অনুকূল তর্ক দেখাইতে হইবে—যদি চাক্ষুষ দ্রব্যত্বটী সাবয়বত্বের ব্যভিচারী হয় অর্থাৎ চাক্ষুষ দ্রব্যটী সাবয়ব না হইয়া যদি নিরবয়ব হয়, তবে তাহা মহত্ত্ববিশিষ্ট হইবে না। কারণের বহুত্ব, মহত্ত্ব ও প্রচয় ( শিথিল সংযোগ ) হইতে মহত্ত্ব উৎপন্ন হয়। ত্রসরেণু নিরবয়ব হইলে কারণের বহুত্ব বা

**अपकृष्टमहत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य प्रयोजकत्वात्। न चैवंक्रमेण तदवयवधारापि**

**जक** विपक्षबाधकतर्करहितम्। **अपकृष्टमहत्त्वं** कार्यमहत्त्वम्। **अनेकेति**। अनेकं द्रव्य-मवयवरूपं, तद्वत्त्वं सावयवत्वमित्यर्थः। अत्र च सावयवत्वमवयवपरम्परावत्त्वम्। अनेक-द्रव्यसमवेत-समवेतत्वरूपं बोध्यम्, तेन द्व्यणुकस्य सावयवत्वेऽपि न तत्र महत्त्वोत्पत्तिः। **प्रयोजकत्वादिति**। नियतपूर्ववर्त्तित्वादित्यर्थः, कारणत्वादिति यावत्। तत्र प्रथमा-नुमानेऽनुकूलतर्काकारश्च—चाक्षुषद्रव्यत्वं यदि सावयवत्वव्यभिचारि स्यात्, महत्त्व-समानाधिकरणं न स्यात्, सावयवत्वस्यापकृष्टमहत्त्वं प्रति कारणत्वात्, कारणाभावेन कार्याभाव-नियमात्। न च तद् युक्तं, महत्त्वस्य प्रत्यक्षमात्रं प्रति कारणत्वात्। न च त्रसरेणुमहत्त्वस्य नित्यत्वं, महत्त्वस्य निरुपाधिसहचारेण जन्यत्वनियमात्। द्वितीयानु-मानेऽनुकूलतर्काकारश्च—महदारम्भकत्वं यदि सावयवत्वव्यभिचारि स्यात्, महत्त्व-जनकत्वसमानाधिकरणं न स्यात्, कार्यमहत्त्वं प्रति चावयवगतस्य सावयवत्वस्य प्रयोज-कत्वात्, अन्यथाऽवयवप्रकर्षो दूर-दूरतरादौ कार्ये महत्त्वप्रकर्षं नानुविदध्यात्। नन्वेवम-प्यवयवगतसावयवत्वं कार्यमहत्त्वं प्रत्यप्रयोजकं, द्व्यणुकानां निरवयवत्वेऽपि बहुत्वसंख्या-वशादेव महत्त्वोपपत्तेर्भावादिति चेत्। न। महतः कार्यद्रव्यस्य कार्यद्रव्यारभ्यत्व-नियमात्। अन्यथा परमाणुभिरेव बहुत्वसंख्योपेतैर्महद्द्रव्यारम्भे घटादेरपि तैरारम्भाद् घटे नष्टे कपाल-शर्करा-चूर्णाद्यान्तरालिकाल्पाल्पतरादिकार्योपलम्भविरोधात्। तथा च कम्बुग्रीवादीनां घटत्वादिव्यञ्जकानामभावाद् घटत्वादीनामुपलम्भाभावप्रसङ्गः। न च तथा। तस्मात् कार्यकारणभावस्यानुकूलतर्कस्य सद्भावान्नाप्रयोजकत्वमिति भावः। ननु द्व्यणुकावयवाः सावयवा द्रव्यारम्भकत्वात्, मूर्त्तत्वाद्वेत्यादिना परमाणोरप्यवयवोऽस्तु, एवं तस्य तस्यापीति चेत्, तत्राह—**न चेति**। **एवंक्रमेण**—पूर्वोक्तानुमानक्रमेण।

ইহা বলা যায় না। কারণ অপকৃষ্ট মহত্ত্বের প্রতি অনেক-দ্রব্যত্বটী (অণুভিন্ন দ্রব্যত্বটী) প্রয়োজক অর্থাৎ ত্রসরেণু সাবয়ব না হইলে তাহার চাক্ষুষ প্রত্যক্ষই হইবে না; কারণ প্রত্যক্ষের হেতু মহত্ত্ব এবং সেই মহত্ত্বের হেতু হইতেছে সাবয়বত্ব। ত্র্যণুক সাবয়ব না হইলে উহা সম্ভব হয় না—এইরূপ বিপক্ষবাধক অনুকূল তর্ক থাকায় উহা অপ্রয়োজক নহে। এইরূপ ভাবে অর্থাৎ "দ্ব্যণুকাবয়বাঃ (পরমাণবঃ) সাবয়বাঃ দ্রব্যারম্ভকত্বাৎ মূর্ত্তত্বাৎ বা"—এইরূপ অনুমানের দ্বারা পরমাণুর অবয়ব এবং এইরূপে তাহারও অবয়ব এবং তাহারও অবয়ব—এইরূপ অবয়বধারাও সিদ্ধ

**सा च त्रिधा भवेद् देहमिन्द्रियं विषयस्तथा ॥ ३७**

सिध्येदिति वाच्यम्। अनवस्थाभयेन तदसिद्धेरिति। **सा च त्रिधेति**। सा कार्य-रूपा पृथिवी त्रिविधा शरीरेन्द्रिय-विषयभेदादित्यर्थः ॥ ३७

**तदसिद्धेः**—अवयव-धारायाः असिद्धेः। अनुकूलतर्काभाव-प्रतिकूलतर्कयोः सद्भावेन व्याप्तिग्रहाभावादिति भावः। प्रतिकूलतर्कश्चात्रानवस्थाप्रसङ्गः परमाणोः सावयवत्वेन द्व्यणुके महत्त्वोत्पत्तिप्रसङ्गश्च बोध्यः ॥३७॥

হউক,—ইহা বলা যায় না। কারণ অনবস্থা ভয়ে তাহার সিদ্ধি হয় না অর্থাৎ পূর্ব্বোক্ত অনুমানের দ্বারা পরমাণুর অবয়ব সিদ্ধি হইলে, অন্য কোন অনুমানের দ্বারা পরমাণুর অবয়বেরও অবয়ব সিদ্ধি হইতে পারে, এইরূপে তাহারও অবয়ব সিদ্ধি হইলে অবয়ব ধারার বিশ্রান্তি না হওয়ায় অনবস্থা হয় বলিয়া পরমাণুর অবয়ব সিদ্ধি হয় না। **সা চ** ইত্যাদি গ্রন্থের অর্থ—সেই কার্য্যরূপা পৃথিবী—শরীর, ইন্দ্রিয় ও বিষয়ভেদে ত্রিবিধ ॥৩৭॥

**বিবৃতি**

মহত্ত্ব প্রভৃতি না থাকায় উহাতে মহত্ত্ব উৎপন্ন হইবে না। আর ঐ মহত্ত্ব নিত্যও বলা যায় না, কারণ চাক্ষুষ মহত্ত্বমাত্রই কার্য্য; ত্রসরেণুতে ঐ মহত্ত্ব উৎপন্ন না হইলে উহার চাক্ষুষ প্রত্যক্ষও হইবে না। অথচ উহা প্রত্যক্ষ। এইরূপ তর্কের দ্বারা ব্যভিচার শঙ্কা নিরস্ত হইলে চাক্ষুষদ্রব্যত্ব হেতু দ্বারা ত্রসরেণুর অবয়ব সিদ্ধি হইবে।

পরে ত্রসরেণোরবয়বাঃ (দ্ব্যণুকাঃ) সাবয়বাঃ মহদারম্ভকত্বাৎ—অর্থাৎ যে যে মহতের আরম্ভক, সে সাবয়ব; যেমন কপাল। এই দ্ব্যণুকও যখন মহৎ ত্রসরেণুর আরম্ভক, তখন সেও সাবয়ব হইবে—এই অনুমানের দ্বারা দ্ব্যণুকের যে অবয়ব সিদ্ধি হয়, সেই অবয়বই পরমাণু। কিন্তু যদি কাহারও এইরূপ আশঙ্কা হয় যে, মহদারম্ভকত্ব হেতুটী সাবয়বত্বের ব্যভিচারী কিনা অর্থাৎ দ্ব্যণুক মহতের আরম্ভক হউক, কিন্তু সাবয়ব না হউক। তবে ঐরূপ ব্যভিচার শঙ্কা নিবৃত্তির জন্য এস্থলে এইরূপ অনুকূল তর্ক দেখাইতে হইবে যে, যদি মহদারম্ভকত্বটী সাবয়বত্বের ব্যভিচারী হয় অর্থাৎ দ্ব্যণুকটী মহতের আরম্ভক হইয়াও যদি নিরবয়ব হয়, তবে উহা ত্রসরেণুতে মহত্ত্বের জনক হইবে না। যেহেতু কার্য্যমহত্ত্বের প্রতি কারণের সাবয়বত্বও কারণ। ইহা স্বীকার না করিলে অবয়ব প্রকর্ষ দ্বারা দূরবর্ত্তী বা দূরতরবর্ত্তী কার্য্যে মহত্ত্বের প্রকর্ষ উপলব্ধ হইত না। কারণের বহুত্বকে কার্য্যের মহত্ত্বের প্রতি কারণ বলিলে নিরবয়ব বহু দ্ব্যণুক দ্বারাই ঘটাদিকার্য্য

**योनिजादिर्भवेद् देह इन्द्रियं घ्राणलक्षणम्।**

तत्र देहमुदाहरति—**योनिजादीति**। योनिजमयोनिजञ्चेत्यर्थः। योनिजमपि द्विविधं जरायुजमण्डजञ्चेति। जरायुजं मानुषादीनाम्। अण्डजं सर्पादीनाम्। अयोनिजं स्वेदजोद्भिज्जादिकम्। स्वेदजाः कृमिदंशाद्याः। उद्भिज्जास्तरुगुल्माद्याः।

**योनिजं** शुक्रशोणितसन्निपातो योनिस्तस्माज्जातम्। **जरायुः** गर्भवेष्टनचर्मपुटकम्। **मानु**षादीनामित्यादिना पशुमृगादीनां परामर्शः। **सर्पादीना**मित्यादिना विहङ्गमादिपरिग्रहः। **उद्भि**ज्जादिकमित्यादिना देवादिशरीरपरिग्रहः। तथा च भाष्यं—"देवर्षीणां शरीरं धर्मविशेषसहितेभ्योऽणुभ्यो जायते" इति। ननु योनिजवन्नायोनिजमपि शरीरमुपलभामहे इति चेत्। न। देवानामृषीणां च सनकादीनामयोनिजदेहसत्त्वात्, पुराणेतिहासादिषु तथैव श्रूयमाणत्वात्। लोकेऽपि च वृश्चिक-मशकादिशरीराणां योनिमन्तरेणैवोत्पत्तिदर्शनात्। तथा चोक्तं **युक्तिदीपिका**याम्—"पूर्वसर्गे प्रकृतेरुत्पन्नानां प्राणिनां सत्त्वधर्मोत्कर्षादन्तरेण द्वयसमापत्तिं मनसैवाऽपत्यमन्यद् वा यथेप्सितं प्रादुर्बभूव। तदेतदद्यापि चानुवर्त्तते। यत् तु कच्छपिका निरीक्षितेनाण्डधारणं करोती"ति। प्रपञ्चस्तत्रैवावगन्तव्यः। **दंशाद्या** इत्यादिना यूकादीनां परिग्रहः। **गुल्माद्या** इत्यादिना लता-

সেই ত্রিবিধ পৃথিবীর মধ্যে **যোনিজাদি** গ্রন্থের দ্বারা দেহের উদাহরণ দেখাইতেছেন। **যোনি**জাদি শব্দের অর্থ—যোনিজ ও অযোনিজ। [এস্থলে মূলোক্ত-আদি শব্দের দ্বারা অযোনিজ দেহ গৃহীত হইয়াছে।] জরায়ুজ ও অণ্ডজ ভেদে যোনিজ দেহও দুই প্রকার। মনুষ্য প্রভৃতির দেহ জরায়ুজ। সর্পাদির দেহ অণ্ডজ। স্বেদজ, উদ্ভিজ্জ ও দেবাদির শরীর—অযোনিজ। [তন্মধ্যে] কৃমি, দংশ (ডাঁস) প্রভৃতির দেহ স্বেদজ। তরু গুল্মাদি উদ্ভিজ্জ দেহ অর্থাৎ তরু গুল্মাদির

**বিবৃতি**

উৎপন্ন হইতে পারে। তাহা হইলে ঘটাদি বিনষ্ট হইলে কপাল প্রভৃতি দেখা যাইত না এবং ব্যঞ্জক সংস্থান না থাকায় ঘটত্বাদি জাতিও প্রত্যক্ষ হইত না। অতএব কার্য্যের মহত্ত্বের প্রতি অবয়বের সাবয়বত্বও কারণ। এইরূপ তর্কের দ্বারা ব্যভিচার-শঙ্কা নিরস্ত হইলে মহদারম্ভকত্ব হেতু দ্বারা দ্ব্যণুকের অবয়ব সিদ্ধি হইবে। সুতরাং এই কার্য্যকারণভাবরূপ অনুকূল তর্ক থাকায় পূর্ব্বোক্ত দ্ব্যণুক ও পরমাণুর সাধক অনুমান অপ্রয়োজক নহে। তাই বলিলেন—**ন চেদমপ্রয়োজকম্, অপকৃষ্ট-মহত্ত্বং প্রত্যনেকদ্রব্যবত্ত্বস্য প্রয়োজকত্বাৎ॥ ৩**

पत्तिः, यत्किञ्चिद्विषयकत्वे विनिगमनाविरहः, सुषुप्तावपि विषयावभास-प्रसङ्गाच्च, **सर्वज्ञत्वा**पत्तिरिति। यद्यपि सर्वविषयकज्ञानत्वं न सर्वज्ञत्वं, सर्वविषयकज्ञानवत्त्वस्यैव तत्त्वात्, तथापि सर्वविषयकविज्ञानात्मना स्वस्य सर्वविषयकत्वग्रहणात् सर्वज्ञत्वम्। न चैषः सर्वज्ञः। तस्मात् सर्वविषयकविज्ञानात्मन आत्मत्वं न युक्तमिति भावः। द्वितीये दूषणमाह —**यत्किञ्चि**दिति। अनियतैकविषयकत्वे इत्यर्थः। **विनिगम**नाविरह इति। एकतर-पक्ष-साधक-युक्त्यभाव इत्यर्थः। तथा च किंविषयं विज्ञानमात्मा, किंविषयं नेति निर्णया-भावादनियतैकविषयकविज्ञानात्मनो नात्मत्वसिद्धिरिति भावः। उभयपक्ष-साधारणं दोष-माह—**सुषुप्ता**वपीति। सर्वविषयकविज्ञानरूपस्यानियतैकविषयकविज्ञानरूपस्य वात्मनः स्वप्रकाशत्वाभ्युपगमात् सुषुप्तावपि तत्प्रकाशो युक्तः। न हि स्वप्रकाशस्य विज्ञानात्मनः कदाचित् प्रकाशः कदाचिच्चाप्रकाशः, घटादिवत् परप्रकाश्यत्वापत्तेः। तस्मात् तस्य सदैव प्रकाशमानत्वमभ्युपगमनीयम्। प्रकाशमाने च तस्मिन् तद्विषयस्याप्रकाशो नैव युज्यते। न हि प्रकाशसम्बद्धस्याप्रकाशो दृश्यते उपपद्यते वा। प्रकाशसम्बद्धस्याप्रकाशे कदापि तत्प्रकाशो न स्यात्। तस्मात् सुषुप्तावपि विषयप्रकाशो दुर्निवार इति भावः।

আপত্তি হয়। আর যৎকিঞ্চিৎ বিষয়ক হইলে বিনিগমনাবিরহ অর্থাৎ কোন বস্তু বিষয়ক আলয়-বিজ্ঞান আত্মা, কোন বস্তু বিষয়ক আলয়-বিজ্ঞান আত্মা নয়—ইহার অন্যতর পক্ষের নির্ণয়ে কোন যুক্তি নাই এবং সুষুপ্তিতেও বিষয়-প্রকাশের

**বিবৃতি**

বৌদ্ধমতে কার্য্যকারী বস্তুমাত্রই ক্ষণিক। যে ক্ষণে বস্তুটী উৎপন্ন হয়, তাহার পরক্ষণে সেই বস্তুর নাশ ও তাহা হইতে তৎসদৃশ দ্বিতীয় বস্তুর উৎপত্তি হয়। উভয় বস্তু অত্যন্ত ভিন্ন হইলেও অতি সাদৃশ্য নিবন্ধন উহাদের ভেদজ্ঞান হয় না। এই আলয় বিজ্ঞানও কার্য্যকারী বলিয়া ক্ষণিক। প্রতিক্ষণে পূর্ব আলয় বিজ্ঞান হইতে পরক্ষণে তৎসদৃশ অপর আলয়বিজ্ঞান উৎপন্ন হয়। সুষুপ্তিতেও এই আলয় বিজ্ঞান-ধারা অব্যাহত থাকে। পূর্ব্ব পূর্ব্ব আলয়বিজ্ঞানের সংস্কারগুলি উত্তর উত্তর আলয়-বিজ্ঞানে তৎসদৃশ সংস্কারান্তর উৎপন্ন করে। তাহা হইলে পূর্ব্ব পূর্ব্ব আলয়বিজ্ঞান যাহা যাহা দেখিয়াছিল, পরবর্ত্তী আলয়বিজ্ঞান তাহা স্মরণ করিতে পারে। ইহাতে কোনই অনুপপত্তি নাই। এই অভিপ্রায়ে বলিলেন—**নানুপপত্তিঃ স্মরণাদেঃ।**

জ্ঞান, ইচ্ছা, কৃতি ও দ্বেষ—এই চারিটীর বিষয় আছে বলিয়া ইহারা সবিষয়ক। আলয়বিজ্ঞানও যখন বিজ্ঞান, তখন উহাও সবিষয়ক। এই জ্ঞানাদির বিষয় একটি

**ज्ञानस्य सविषयत्वात्। तदानीं निराकारा चित्सन्ततिरनुवर्त्तत इति चेत्। न,**

ननु विज्ञानस्य स्वप्रकाशत्वात् सुषुप्तौ तत्प्रकाशः स्यात्, अस्वप्रकाशस्य विषयस्य प्रकाशस्तु कथमिति चेत्, तत्राह—**ज्ञानस्येति**। विज्ञानस्यात्मत्वाभिमतस्येत्यर्थः। **सविषयत्वा**-दिति। तथा च सविषयस्य विज्ञानस्यात्मत्वे विषयस्फुरणं नैव वारणीयम्। न हि विषय-स्फुरणं विना सविषयस्य विज्ञानस्य स्फुरणं सम्भवति, सर्वस्यैव हि ज्ञानस्य प्रत्यात्मं सवियकत्वेनैवानुभूयमानत्वादिति भावः। **तदानीं** सुषुप्तौ। **निराकारा** निर्विषया। **चित्सन्ततिः** विज्ञानसन्ततिः। पूर्वपूर्वक्षणिकविज्ञानादुत्तरोत्तरं यत् क्षणिकविज्ञानं जायते, सैव विज्ञानधारेति चित्सन्ततिरिति विज्ञानसन्तान इति च बौद्धैरभिधीयते।

আপাত্ত হয়। কারণ বিজ্ঞান সবিষয়ক অর্থাৎ বিষয়বিশিষ্ট বিজ্ঞান আত্মা হইলে সুষুপ্তিতে আত্মার প্রকাশবশতঃ বিষয়েরও প্রকাশ হইবে। [পূঃ] সেই সময়ে (সুষুপ্তিতে) নির্বিষয়ক বিজ্ঞানধারা অনুবৃত্ত হয়—এই যদি বলি। [উঃ] না—

### বিবৃতি

হইবে, একাধিক হইবে না—এইরূপ যখন বিষয় নিয়ম নাই, তখন জ্ঞানের বিষয় এক হইতে পারে এবং একাধিকও হইতে পারে। সুতরাং প্রশ্ন হইতে পারে—সর্ববিষয়ক আলয়বিজ্ঞান আত্মা? অথবা যৎকিঞ্চিৎ বিষয়ক আলয়বিজ্ঞান আত্মা? যদি সর্ব-বিষয়ক আলয়বিজ্ঞান আত্মা হয়, তবে ঐ আত্মা সর্বজ্ঞ হইয়া পড়িবে। স্বপ্রকাশ বিজ্ঞান সর্বদা প্রকাশমান থাকিলে তাহার বিষয়ও প্রকাশমান থাকিবে। বিষয়ের প্রকাশ ব্যতীত সবিষয়ক বিজ্ঞানের প্রকাশ সম্ভব নহে। আলয়বিজ্ঞানের নিকট সমস্ত বিষয়ের প্রকাশ হইলে ঐ আলয়বিজ্ঞান সর্ব্ববিষক জ্ঞানবান্ হইয়া সর্ব্বজ্ঞ হইবে। অথচ আত্মা সর্বজ্ঞ নহে। সুতরাং সর্ব্ববিষয়ক আলয়বিজ্ঞান আত্মা নহে। যৎকিঞ্চিদ্‌বিষয়ক আলয়-বিজ্ঞানকে আত্মা বলিলে এই দোষ হয় না বটে, কিন্তু যৎকিঞ্চিৎ শব্দে যখন কোন নির্দিষ্ট বস্তু বুঝায় না, তখন কি-বিষয়ক বিজ্ঞান আত্মা, কি-বিষয়ক বিজ্ঞান আত্মা নয়, ইহা নির্ণয় করা কঠিন। ঘটবিষয়ক বিজ্ঞান আত্মা হইবে, অন্য-বিষয়ক বিজ্ঞান আত্মা হইবে না, ইহাতে কোন যুক্তি নাই এবং যৎকিঞ্চিৎ শব্দে ঘটকেও বুঝায় নাই। ফলে অনির্দিষ্ট কোন একটী বিষয়ক বিজ্ঞানকে আত্মা বলা যায় না বলিয়া যৎকিঞ্চিৎ বিষয়ক আলয়বিজ্ঞানও আত্মা নহে। সবিষয়ক বিজ্ঞানকে আত্মা বলিয়া স্বীকার করিলে সুষুপ্তিতেও বিষয়ের অবভাস হইয়া পড়িবে। স্বপ্রকাশ বিজ্ঞান প্রকাশিত থাকিলে বিষয়েরও প্রকাশ অবশ্যই হইবে। প্রকাশের নিকটে কোন বস্তুই

तस्याः प्रकाशत्वे प्रमाणाभावात्, अन्यथा घटादीनामपि ज्ञानत्वापत्तिः। न चेष्टापत्तिः, विज्ञान-व्यतिरिक्त-वस्तुनोऽभावादिति वाच्यम्, घटादेरनुभूयमानस्याऽपलपितुमशक्यत्वात्। आकारविशेष एवाऽयं विज्ञानस्येति चेत्। न। किमयमाकारोऽतिरिच्यते विज्ञानात्? तर्हि समायातं विज्ञान-व्यतिरिक्तेन। नातिरिच्यते चेत्, तर्हि समूहालम्बने नीलाकारोऽपि पीताकारः स्यात्, स्वरूपतो

तृतीये दूषणमाह—**तस्या** इति। चित्सन्ततेरित्यर्थः। **प्रकाशत्वे**—ज्ञानत्वे। ज्ञानत्वस्य सविषयकत्व-व्याप्यत्वात्, तथैव प्रत्यात्ममनुभूयमानत्वादिति भावः। **अन्यथा**—निर्विषयस्यापि ज्ञानत्वे। **ज्ञानत्वा**पत्तिरिति। घटादीनां निर्विषयत्वाविशेषादिति भावः। नन्वेतन्मते वस्तुमात्रस्यैव विज्ञानस्वरूपत्वाद् घटादीनां विज्ञानस्वरूपत्वमिष्टमित्याशङ्क्य समाधत्ते—**घटादे**रिति। विज्ञानातिरिक्तत्वेनेत्यादिः। नन्विमे घटादयो न सन्तीति नेत्युच्यते। अपि त्वनादिवासनावैचित्र्याद् विज्ञानमेव बाह्याकारतामापन्नं घटादिबाह्यविषयरूपेणानुभूयते, ज्ञानज्ञेययोः सहोपलम्भाद् वास्तवभेदासम्भवात्। उक्तं हि—"सहोपलम्भनियमादभेदो नीलतद्धियो"रिति। तस्मादनुभूयमाना घटादयो विज्ञानस्यैवाकारविशेषाः स्वीकर्त्तव्या इत्याह—**आकार**विशेष इति। आकारस्य विज्ञानातिरिक्तत्वमनतिरिक्तत्वं वेति विकल्प्याद्ये दूषणमाह—**तर्ही**ति। **समायातम्**—सिद्धम्। विज्ञानाति-

তাহা বলিতে পার না। কারণ তাহার অর্থাৎ নির্বিষয়ক বিজ্ঞানের জ্ঞানত্বে কোন প্রমাণ নাই। অন্যথা অর্থাৎ বিনা প্রমাণে নির্বিষয়ক বিজ্ঞানকে জ্ঞান বলিয়া স্বীকার করিলে [ নির্বিষয়ক ] ঘটাদিরও জ্ঞানত্বের আপত্তি হইবে। এই আপত্তি ইষ্ট (অভিলষিত), কারণ [ আমার মতে ] বিজ্ঞান ব্যতিরিক্ত কোন বস্তুই নাই [ সমস্তই বিজ্ঞান স্বরূপ ]—ইহা বলিতে পার না। যেহেতু [ বিজ্ঞানভিন্নরূপে ] অনুভূয়মান ঘটাদির অপলাপ করিতে পার না। [ পূঃ ] এই ঘটাদি বিজ্ঞানেরই আকার বিশেষ—এই যদি বলি। [ উঃ ] না—তাহা বলিতে পার না। কারণ এই আকার কি বিজ্ঞান হইতে অতিরিক্ত? যদি বিজ্ঞান হইতে অতিরিক্ত হয়, তবে বিজ্ঞান ব্যতিরিক্ত বস্তু সমায়াত অর্থাৎ সিদ্ধ হইল। আর যদি অতিরিক্ত না হয়, তাহা

**বিবৃতি**

অপ্রকাশিত থাকে না। সুষুপ্তিতে যদি বিষয়ের প্রকাশ হয়, তবে সুষুপ্তিই হইবে না। জ্ঞানাভাবরূপ সুষুপ্তিকালে কোন জ্ঞানই হইতে পারে না। এই অভিপ্রায়ে বলিলেন—**সুষুপ্তাবপি বিষয়াবভাসপ্রসঙ্গাচ্চ**।

**विज्ञानस्याऽविशेषात्। अपोहरूपो नीलत्वादिर्विज्ञानधर्म इति चेत्। न, नीलत्वा-**

रिक्ताकारस्वीकारे इत्यर्थः। द्वितीये दूषणमाह—**समूहालम्बन** इति। अयं नीलः, अयं पीत इति नीलपीतोभयविषयके एकस्मिन् ज्ञाने इत्यर्थः। नानाप्रकारतानिरूपितं नाना-मुख्यविशेष्यताशालि ज्ञानं **समूहालम्बनम्**। विशेषणद्वयदानात् 'धवखदिरौ द्वौ' 'खड्गी चैत्रः कुण्डली'ति ज्ञानयोः समूहालम्बनत्वं निराकृतम्। संशये तु नानाप्रकारता-निरूपितैकविशेष्यतायाः सत्त्वान्न समूहालम्बनत्वम्। **स्यादि**ति। यथा हि नीलाकारो विज्ञानादभिन्नः, एवं पीताकारोऽपि। तथा च नीलाकारात्मकविज्ञानाभिन्नस्य पीताकारस्य नीलाभिन्नत्वम्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्। तेन नील-पीतयोरभेद इति भावः। उपलक्षणं चैतत्, विरुद्धविषयकत्वेन विरुद्धधर्माध्यासाद् ज्ञानस्याप्येकस्य भेद-प्रसङ्गः। न च बाह्यस्यैवंविध-विरुद्धधर्मसंसर्गाद् भयं, विरुद्धधर्माध्यासेऽप्यभेदेऽर्थक्रिया-चेतनप्रवृत्त्यादीनां सङ्करप्रसङ्गाद् विवेचनानुपपत्तिप्रसङ्गाच्च। न तु विज्ञानस्येति चेत्। न। विरुद्धधर्माध्यासेऽपि ज्ञानस्याभेदे प्रतिभासनियमाभावप्रसङ्गात्। **अविशेषात्** नील-पीताकार-विज्ञानस्यैकत्वात्। ननु नीलाकारः पीताकारश्चाभिन्न एव, भेदप्रतीतिस्तु नीलपीतधर्मयोर्नीलत्वपीतत्वयोर्भेदात्। न च तयोरपि नीलत्वपीतत्वयोर्विज्ञानस्वरूपत्वाद-भेद इति वाच्यम्। नीलत्वादेरपोहरूपस्यापारमार्थिकस्य पारमार्थिकविज्ञानाभेदासम्भवा-दित्यभिप्रायवान् शङ्कते—**अपोहरूप** इति। अनीलव्यावृत्तिरूप इत्यर्थः। बौद्धैर्हि

হইলে সমূহালম্বন জ্ঞানে নীলাকারও পীতাকার হউক। কারণ স্বরূপতঃ বিজ্ঞানের কোন বিশেষ (ভেদ) নাই অর্থাৎ নীলপীত-বিষয়ক সমূহালম্বন বিজ্ঞানটি এক, উহার কোন ভেদ নাই। সুতরাং পীতবস্তুর সহিত অভিন্ন যে বিজ্ঞান, সেই বিজ্ঞানের সহিত নীলবস্তুটি অভিন্ন হওয়ায়, নীলবস্তু ও পীতবস্তু পরস্পর অভিন্ন হউক। [কারণ তদভিন্নের (নীলাভিন্ন বিজ্ঞানের) সহিত অভিন্ন বস্তু তদভিন্ন (নীলাভিন্ন) হইয়া থাকে]। অপোহরূপ অর্থাৎ অনীলব্যাবৃত্তিরূপ নীলত্ব প্রভৃতি বিজ্ঞানের ধর্ম—এই

**বিবৃতি**

প্রতীয়মান বাহ্য বস্তুমাত্রই বিজ্ঞানের আকার। ঐ আকার বিজ্ঞান হইতে অভিন্ন হইলে নীলাকার ও পীতাকার পরস্পর অভিন্ন হইয়া পড়িবে। কারণ তদভিন্নের সহিত অভিন্ন বস্তু তদভিন্ন হইয়া থাকে। নীলাকারের সহিত অভিন্ন বিজ্ঞান যখন পীতাকারের সহিত অভিন্ন, আর ঐ বিজ্ঞানের যখন কোন বিশেষ (ভেদ) অর্থাৎ নীলাভিন্ন বিজ্ঞান এবং পীতাভিন্ন বিজ্ঞান যখন এক, তখন নীলাকার

**दीनां विरुद्धानामेकस्मिन्नसमावेशात्; इतरथा विरोधावधारणस्यैव दुरुपपादत्वात्। न वा वासना-संक्रमः सम्भवति, मातृ-पुत्रयोरपि वासनासंक्रम-प्रसङ्गात्। न**

नित्यानेकसमवेतरूपा जातिर्नाङ्गीक्रियते। अपि तु नीलप्रतीतावनीलव्यावृत्तिदर्शनादतद्-व्यावृत्तिरूपा सा स्वीक्रियते। एवञ्चानीलव्यावृत्तिर्हि नीलत्वमपीतव्यावृत्तिश्च पीतत्वमिति फलितम्। तथा च नीलपीताभिन्ने विज्ञाने नीलत्व-पीतत्वयोर्विरुद्धधर्मयोः सत्त्वात् तयोर्भेदप्रतीतिरिति भावः। **इतरथा** विरुद्धनीलत्वादीनामेकत्र समावेशे। यत् पूर्वमुक्तं —पूर्वपूर्वविज्ञानसंस्कारा उत्तरोत्तरविज्ञाने समुत्पद्यन्त इति, तमेव वासनासंक्रमं मुख्यतया दूषयति—**न वे**ति। अन्यानुभवस्याऽन्यत्र स्मरणजननासम्भवात्, अनुभवस्मरणयोः सामानाधिकरण्येनैव कार्यकारणभावादिति भावः। वैयधिकरण्ये कार्यकारणभावाङ्गीकारे दोषमाह—**मातृ**पुत्रयोरिति। पूर्वालयविज्ञानस्योत्तरालयविज्ञानहेतुत्वाद् यथा पूर्वालय-विज्ञाननिष्ठः संस्कार उत्तरालयविज्ञाने संक्रामति। तथा मातृविज्ञानस्य पुत्रविज्ञान-हेतुत्वान्मातृविज्ञाननिष्ठसंस्कारस्य पुत्रविज्ञाने संक्रमः स्यात्। न चेयमिष्टापत्तिः, मात्रानु-भूतस्य गर्भस्थेन तनयेन स्मरणप्रसङ्गादिति भावः। ननु यत्रोपादानोपादेयभावस्तत्रो-पादाननिष्ठसंस्कारस्योपादेये संक्रमः, नान्यत्र। मातृविज्ञानं तु पुत्रविज्ञानस्य नोपादानं,

যদি বলি অর্থাৎ নীলাকার ও পীতাকার একই বটে, কিন্তু নীলের ধর্ম্ম **অনীলব্যাবৃত্তি-** ( অনীল-ভেদ )-রূপ নীলত্ব এবং পীতের ধর্ম্ম অপীতব্যাবৃত্তিরূপ পীতত্বের **ভেদবশতঃ** নীলাকার ও পীতাকারের ভেদ **হইয়া থাকে**—এই যদি বলি। না—তাহা **বলিতে** পার না। কারণ [ পরস্পর ] বিরুদ্ধ নীলত্বাদি ধর্ম্মের এক ধর্ম্মীতে **সমাবেশ হয় না**। **অন্যথা** অর্থাৎ বিরুদ্ধ ধর্ম্মের একত্র সমাবেশ হইলে বিরোধ নিশ্চয়ের **উপপাদনই** হইবে না। আর বাসনার সংক্রমও সম্ভব নহে। কারণ মাতা এবং পুত্রেরও বাসনা

**বিবৃতি**

ও পীতাকার পরস্পর অভিন্ন হইবে। নৈয়ায়িক প্রভৃতি নীল-পীতের পরস্পর অভেদ স্বীকার না করিলেও নীল-পীতকে বৌদ্ধগণ অভিন্ন মনে করেন। বৌদ্ধমতে নীল-পীত বস্তুতঃ অভিন্ন হইলেও নীলত্ব ও পীতত্ব ধর্ম অভিন্ন নহে। অনীলব্যাবৃত্তিরূপ নীলত্ব এবং অপীতব্যাবৃত্তিরূপ পীতত্ব পরস্পর বিরুদ্ধ। এই বিরুদ্ধ নীলত্ব ও পীতত্ব বিজ্ঞানে আছে বলিয়া নীল-পীতকে ভিন্ন মনে হয়; কিন্তু নীল-পীত বস্তুতঃ ভিন্ন নহে। উহারা বিজ্ঞানেরই আকার 'বিশেষ—বিজ্ঞানেরই স্বরূপ। এই অভিপ্রায় প্রকাশ করিতে বিশ্বনাথ বলিলেন—**অপোহরূপো নীলত্বাদির্বিজ্ঞানধর্ম্ম ইতি চেৎ।**

**चोपादानोपादेयभावो नियामक इति वाच्यम्, वासनायाः संक्रमासम्भवात्। उत्तरस्मिन् उत्पत्तिरेव संक्रम इति चेत्। न। तदुत्पादकाभावात्। चितामे-**

कार्याव्यवहितपूर्ववृत्ति-कार्यसजातीयस्यैवोपादानत्वाद् मातृविज्ञानस्य मातृत्वपुत्रत्वरूप-विरुद्धधर्माश्रयत्वेन पुत्रसजातीयत्वाभावात्। तत् कथं मातृविज्ञाननिष्ठसंस्कारस्य पुत्रविज्ञाने संक्रमः ? कथं वा मात्रानुभूतस्य पुत्रेण स्मरणमित्याशङ्क्य निरस्यति—**न चे**ति। **नियामक** इति। वासनासंक्रमप्रयोजक इत्यर्थः। ननु सम्भवति वासनासंक्रमे उपादानोपादेय-भावस्तन्नियामको भवेत्। न चैषः सम्भवति, स्मृतिहेतुभूतायास्तस्या गुणत्वात्, गुणस्य च निष्क्रियत्वेन संक्रमायोगादित्याशयेन परिहरति—**वासनाया** इति। **संक्रमा**सम्भवा-दिति।' गुणभूताया वासनाया निष्क्रियत्वात्, गुणिनं विहाय गुणभूतायास्तस्याः सञ्चारा-सम्भवादिति भावः। गूढ़ाशयमाविष्कुर्वन् वासनासंक्रममुपपादयति—**उत्तर**स्मिन्निति। **तदुत्**पादकेति। वासनोत्पादकेत्यर्थः। न ह्युत्पादकं विना कस्यचिदुत्पत्तिः। न च पूर्वविज्ञानमेव तदुत्पादकं, तस्य नष्टत्वात्, उत्तरविज्ञानस्य च सहभुवः सव्येतरविषाण-योरिव हेतुत्वायोगात्। नापि पूर्वविज्ञानसंस्कारः, तस्यापि पूर्वविज्ञानेन सह नाशात्, अन्यस्य चाभावादिति भावः। ननूत्तरविज्ञानोत्पत्तिकाले पूर्वविज्ञानस्य नाशेऽपि तस्यैव तत्कारणत्वं युक्तम्, तस्य तदव्यवहितपूर्ववर्त्तित्वात्, अव्यवहितपूर्ववर्त्तिन एव कारण-

সংক্রমের প্রসঙ্গ ( আপত্তি ) হইবে। উপাদান-উপাদেয়ভাব [ ইহার ] নিয়ামক অর্থাৎ যাহাদের মধ্যে উপাদান-উপাদেয়ভাব আছে, তাহাদের মধ্যে উপাদানের বাসনা উপাদেয়েই সংক্রান্ত হয়, অন্যত্র হয় না—ইহাও বলিতে পার না। কারণ বাসনার সংক্রম ( সঞ্চার ) সম্ভব হয় না। পরবর্ত্তী বিজ্ঞানে [ বাসনার ] উৎপত্তিই [ বাসনার ] সংক্রম—এই যদি বলি। না—তাহা বলিতে পার না। কারণ

**বিবৃতি**

উত্তরবিজ্ঞানে পূর্ববাসনা সদৃশ বাসনান্তরের উৎপত্তিকে বৌদ্ধগণ বাসনাসংক্রম বলেন। যদি উত্তরবিজ্ঞানে বাসনার উৎপত্তি সম্ভব হইত, তবে উহা বলা চলিত। প্রকৃতপক্ষে ঐরূপ বাসনার উৎপত্তি সম্ভব নহে। কারণ উৎপাদক নাই। পূর্ব-বিজ্ঞান বা উহার সংস্কার উত্তর বিজ্ঞানের উৎপত্তিক্ষণে বিনষ্ট হওয়ায় উহারা বাসনা-সংক্রমের উৎপাদক হইতে পারে না। উত্তরবিজ্ঞান ও বাসনা একসঙ্গে উৎপন্ন হয় বলিয়া উত্তরবিজ্ঞানও ঐ বাসনার উৎপাদক নহে। অন্য কোন পদার্থও ঐ বাসনার উৎপাদক নহে। সুতরাং বাসনার উৎপত্তি সম্ভব নহে।

**वोत्पादकत्वे संस्कारानन्त्य-प्रसङ्गः। क्षणिकविज्ञानेष्वतिशय-विशेषः कल्प्यत इति**

त्वात्। न च क्षणिकस्य विज्ञानस्य कार्यकालावृत्तित्वान्न कारणत्वमिति वाच्यम्, अकार्य-कालवृत्तीनामपि कारणत्वदर्शनादित्याशयमाविष्कुर्वन् परिहरति—**चितामे**वेति। विज्ञानानामेवेत्यर्थः। **संस्कारान**न्त्येति। अयं भावः—न ह्यनुभवोत्तरमेव स्मरणम्, बहूनां दिन-मास-वर्षाणां व्यवधानेऽपि स्मरणदर्शनात्। यदा दिनमासादिव्यवधानेन स्मरणम्, तदानुभवादाच स्मृतेः प्रतिक्षणं क्षणिकात्पूर्वपूर्वविज्ञानात् तदनन्तरानन्तरक्षणेषु संस्कारोत्पत्तिः कल्पनीयेति संस्कारानन्त्यम्, विज्ञानानामानन्त्यात् क्षणिकत्वाच्चेति भावः। ननु प्रतिविज्ञानं संस्कारजनकत्वाभ्युपगमे संस्कारानन्त्य-कल्पनागौरवेऽपि यादृश-विज्ञानव्यक्तौ स्मरणमनुभवसिद्धं तत्-स्मरणानुकूला काचिच्छक्तिः तत्पूर्वविज्ञानव्यक्तावेव स्वीकरणीया, तेन न संस्कारानन्त्यप्रसङ्ग इत्याह—**क्षणिक**विज्ञानेष्विति। **अतिशयः**

[ বাসনার ] উৎপাদক নাই। বিজ্ঞানসমূহেরই উৎপাদকত্ব হইলে অর্থাৎ পূর্ব্ব পূর্ব্ব বিজ্ঞান ব্যক্তি [ উত্তর উত্তর বিজ্ঞানে বাসনার ] জনক হইলে, বিজ্ঞান অনন্ত বলিয়া সংস্কারের আনন্ত্যপ্রসঙ্গ অর্থাৎ অনন্ত সংস্কারের উৎপত্তির আপত্তি হইবে। [ পূঃ ] ক্ষণিক-বিজ্ঞানে অতিশয়-( শক্তি- ) বিশেষ অর্থাৎ যে বিজ্ঞানের পরে স্মরণ অনুভব-সিদ্ধ, সেই বিজ্ঞানবর্ত্তী সংস্কারের জনকরূপে তৎপূর্ব্ববর্ত্তী বিজ্ঞানেই ধর্ম্মবিশেষ কল্পিত-

### বিবৃতি

যদিও পূর্ববিজ্ঞানটী কার্য্যকালবৃত্তি নহে, তথাপি কার্য্যের অব্যবহিত পূর্ববর্ত্তী বলিয়াই কারণ হইবে। কার্য্যকালবৃত্তি ব্যক্তিই কারণ হইবে, তাহা না হইলে কেহ কারণ হইবে না, এইরূপ নিয়মও নাই। কার্যকালে না থাকিয়া কেবলমাত্র কার্য্যের অব্যবহিত পূর্ববর্ত্তী হইলেই কারণ হইতে পারে। সুতরাং পূর্ববিজ্ঞানই বাসনার উৎপাদক। এইভাবে যদি পূর্ববিজ্ঞানই বাসনার উৎপাদক হয়, তাহা হইলেও এক স্মৃতির জন্য অনন্ত সংস্কারের উৎপত্তিপ্রসঙ্গ হইবে। কারণ যেখানে বহুবর্ষ পরে স্মরণ হইবে, সেখানে স্মরণের পূর্বপর্য্যন্ত প্রতিক্ষণে বিজ্ঞান ও বাসনার উৎপত্তি স্বীকার করিতে হইবে। তাহাতে মহাগৌরব। এই অভিপ্রায়ে বলিলেন—**চিতামেবোৎ-পাদকত্বে সংস্কারানন্ত্যপ্রসঙ্গঃ।**

অনুভব নিজ অধিকরণেই সংস্কার জন্মাইয়া তদ্দ্বারা স্মৃতির জনক হইয়া থাকে। নিজ অধিকরণ ব্যতীত অন্যত্র ঐ অনুভব সংস্কার উৎপন্ন করে না বলিয়াই অন্য ব্যক্তি অন্যের অনুভূত বিষয় স্মরণ করে না। এই জন্য অনুভবের কর্ত্তাই স্মৃতির কর্ত্তা হইয়া

**चेत्। न, मानाभावात्, कल्पनागौरवाच्च। एतेन क्षणिक-शरीरेष्वेव चैतन्यं**

शक्तिः। **मानाभावा**दिति। स्मरणानुकूला सा शक्तिः स्मरणपूर्वविज्ञानेष्वेव जायते, नान्यविज्ञानेष्वित्यत्र नियामकाभावादित्यर्थः। निरपेक्षात् पूर्वविज्ञानात् स्मरणाकूला शक्तिर्जायते चेत्, सर्वत्र जायेत, नोचेन्न जायेत, न तु क्वचिज् जायेत, निरपेक्ष-कारणसत्तायाः सर्वत्राविशेषादिति भावः। **कल्पना**गौरवादिति। बौद्धमते सन्मात्रस्य क्षणिकतया विज्ञानभेदकल्पने स्मरणव्यक्तिभेदेन शक्तिभेदकल्पने तत्प्रागभावध्वंसादिकल्पने च गौरवादित्यर्थः॥ ननु क्षणिकविज्ञानस्यात्मत्वाभावेऽपि क्षणिकशरीरस्यैवात्मत्वं स्यादिति चेत्तत्राह—**एतेनेति**। वक्ष्यमाणदोषेणेत्यर्थः। **चैतन्यं** ज्ञानवत्त्वमात्मत्वमिति

হয়, সমস্ত বিজ্ঞানে তাহা কল্পিত না হওয়ায় অনন্ত সংস্কারের আপত্তি নাই—এই যদি বলি। না—তাহা বলিতে পার না। কারণ [ উহাতে ] কোন প্রমাণ নাই এবং কল্পনার গৌরবও হয় অর্থাৎ স্মরণের আশ্রয়ীভূত বিজ্ঞানের পূর্ব্ববর্ত্তী বিজ্ঞানমাত্রে শক্তি কল্পিত হইলেও স্মরণ ব্যক্তি ভিন্ন ভিন্ন বলিয়া একই বিজ্ঞানে বিভিন্ন শক্তি এবং সেই শক্তিটী ক্ষণিক বলিয়া তাহার ধ্বংস, প্রাগভাব প্রভৃতির কল্পনায় গৌরব হয়। ইহা দ্বারা অর্থাৎ পূর্ব্বোক্ত যুক্তি দ্বারা ক্ষণিক শরীরেই চৈতন্য—[ এই মত ]

### বিবৃতি

থাকে—ইহাই সাধারণ নিয়ম। কিন্তু বৌদ্ধমতে বস্তুমাত্রই দ্বিতীয়-ক্ষণে বিনাশী বলিয়া, অনুভব নিজ অধিকরণে সংস্কারের জনক না হইলেও, অনুভব-জনক ব্যক্তি হইতে ক্ষণপরম্পরায় যে ব্যক্তিসমূহ উৎপন্ন হয়, তাহাদের মধ্যে স্মরণের অব্যবহিত পূর্ব্ববর্ত্তী ব্যক্তিতে স্মৃতির জনক অতিশয়-বিশেষ উৎপন্ন হয় এবং তাহা হইতেই পরবর্ত্তী বিজ্ঞানে স্মৃতি উৎপন্ন হয়। প্রতিব্যক্তিতে বা যে কোন স্থলে ঐ অতিশয় উৎপন্ন না হওয়ায় গৌরব বা অতিপ্রসঙ্গের সম্ভাবনা নাই। ঐ অতিশয় অতীন্দ্রিয় হইলেও স্মৃতির উৎপত্তি দ্বারা স্মৃতির অব্যবহিত পূর্ব্বক্ষণ-বর্ত্তী বিজ্ঞানব্যক্তিতেই কল্পিত হইবে। বৌদ্ধ-মতে ঐ অতিশয় হইতেছে কারণতাবচ্ছেদক কুর্ব্বদ্রূপত্ব। ইহা স্বীকার না করিলে ধানের গোলাতেই ধান্যাঙ্কুর উৎপন্ন হইত। কারণ বৌদ্ধমতে ধান্যাঙ্কুরের প্রতি অন্য-নিরপেক্ষ একমাত্র ধান্যই কারণ। অন্য-নিরপেক্ষ কারণ থাকিলে কার্য্যের উৎপত্তিতে বিলম্ব হয় না। অঙ্কুরোৎপত্তির পূর্ব্বক্ষণে ধান্যে ঐ অতিশয় স্বীকার করিলে ঐ আপত্তি হইতে পারে না। কারণ গোলার ধানে ঐ অতিশয় বা কুর্ব্বদ্রূপত্ব নাই। তাই বিশ্বনাথ বলিলেন—**ক্ষণিকবিজ্ঞানেঽতিশয়বিশেষঃ কল্প্যতে।**

**प्रत्युक्तं, गौरवादतिशये मानाभावाच्च। बीजादावपि सहकारिसमवधानासमवधानाभ्यामेवोपपत्तेः कुर्वद्रूपत्वाकल्पनात् ॥**

**अस्तु तर्हि क्षणिकविज्ञाने गौरवान्नित्यविज्ञानमेवात्मा, "अविनाशी वा अरे-**

यावत्। **गौरवा**दिति। स एवायमिति-प्रत्यभिज्ञानाद् देहस्थिरत्व-निश्चयेऽपि प्रतिक्षणं तद्भेदकल्पने स्मरणजनकानन्तशक्ति-तत्प्रागभाव-ध्वंसकल्पने च गौरवादित्यर्थः। ननु यदा यदा स्मरणं, तदैव तच्छरीरेष्वेकैव शक्तिः कल्पनीया, नातोऽनन्तशक्तिकल्पना-गौरवमिति चेत्, तत्राह—**अतिशय** इति। **मानाभावात्**—प्रमाणाभावात्। ननु न प्रमाणाभावः, क्षेत्रस्थ-बीजादङ्कुरकार्यान्यथानुपपत्तेरेव प्रमाणत्वात्, अन्यथा कुसूलस्थ-बीजादप्यंकुरोत्पत्तिप्रसङ्गात्, न चैवम्। अतोऽङ्कुरत्वावच्छिन्नं प्रति फलोपधायके क्षेत्रस्थ-बीजे एव कारणतावच्छेदकः कश्चिदतिशयः कुर्वद्रूपत्वपदवेदनीयः स्वीकर्त्तव्यः। एवञ्च क्षणिकविज्ञाने क्षणिकशरीरं वा कुर्वद्रूपत्वेनैव वासनोत्पादकत्वं वाच्यमिति चेत्, तत्राह—**बीजादा**वपीति। **समवधानं**—सम्बन्धः। **उपपत्तेः**—क्षेत्रस्थबीजादङ्कुरोत्पत्तिर्न कुसूलस्थबीजादिति नियमोपपत्तेः। **कुर्वद्रूप**त्वाकल्पनादिति। कुसूलस्थबीजादिषु धरणी-सलिलसंयोगादिरूप-सहकार्य्यभावादेवांकुराभावोपपत्तेः कुर्वद्रूपत्वं तद्रूपेण जनकत्वञ्च न कल्पनीयम्, प्रमाणाभावादिति भावः ॥

वेदान्ती शङ्कते—**अस्तु** तर्हीति। **क्षणिक**विज्ञाने—क्षणिकविज्ञानस्यात्मत्वे। **नित्यविज्ञानं** त्रिकालाबाध्यस्वप्रकाशचैतन्यम्। न च विज्ञानस्य नित्यत्वे ज्ञानरूपत्वे च मानाभावः, श्रुतेस्तत्र प्रमाणत्वादित्याह—**अविनाशी**ति। तत्र प्रथमश्रुत्या विज्ञानस्य

খণ্ডিত হইল [ জানিবে ]। কারণ উহাতেও গৌরব অর্থাৎ 'স এবায়ম্'—এইরূপ প্রত্যভিজ্ঞা (প্রত্যক্ষ) দ্বারা শরীরের স্থিরত্বই নিশ্চয় হয়। শরীর ক্ষণিক হইলে, বিভিন্ন স্মরণের অনুরোধে ক্ষণে ক্ষণে প্রতি শরীরে অনন্ত শক্তি ও তাহার প্রাগ-ভাবাদি কল্পনায় গৌরব হয়। আর [ স্মরণাশ্রয়ের পূর্ব্ব শরীরে স্মরণজনক ] অতিশয়ে কোন প্রমাণ নাই। সহকারী কারণের সান্নিধ্য ও অসান্নিধ্য দ্বারাই [ কদাচিৎ কার্য্যের উৎপত্তি ও অনুৎপত্তি ] উপপন্ন হওয়ায় বীজ প্রভৃতিতেও [ কার্য্যের জনকতাবচ্ছেদকরূপে] কুর্ব্বদ্রূপত্ব কল্পিত হয় না ॥

[ পূঃ ] আত্মা ক্ষণিক বিজ্ঞানস্বরূপ—এই পক্ষে গৌরব হওয়ায় নিত্যবিজ্ঞানই (স্বপ্রকাশ চৈতন্যই) আত্মা হউক; যেহেতু "অবিনাশী বা অরেঽয়মাত্মা" (অরে

ऽयमात्मा" ( बृः ४।५।१४ ) "सत्यं ज्ञानमनन्तं ब्रह्म" ( तैः आः ब्रः १ ) इत्यादि-श्रुतेश्चेति चेत्। न, तस्य सविषयत्वासम्भवस्य दर्शितत्वात्, निर्विषयस्य ज्ञानत्वे मानाभावात्; सविषयकत्वस्याप्यननुभवात्। अतो विज्ञानादिभिन्नो नित्य

नित्यत्वं, द्वितीयश्रुत्या नित्यत्वं ज्ञानरूपत्वञ्च दर्शितम्। **तस्य**—नित्यविज्ञानस्य। **दर्शितत्वा**दिति। "तस्य जगद्विषयकत्व" इत्यादि-ग्रन्थेन दर्शितत्वादित्यर्थः। तथा च सर्वविषयक-नित्यविज्ञानस्यात्मत्वे सर्वज्ञत्वापत्तिः, यत्किञ्चिद्विषयक-नित्यविज्ञानस्यात्मत्वे विनिगमनाविरहः, तस्मात् सविषयकविज्ञानस्यात्मत्वं नैव युक्तमिति भावः। ननु निर्विषयं नित्यविज्ञानमेवात्मेति चेत्, तत्राह—**निर्विषयस्ये**ति। **मानाभावा**दिति। अनुभूयते हि ज्ञानं सविषयकं यद् यज् ज्ञानं तत् सर्वं सविषयकमिति। न हि निर्विषयस्य ज्ञानस्य क्वचिदनुभवोऽस्ति, येन निर्विषयमपि ज्ञानं स्यात्। तथा च ज्ञानत्वस्य सविषयत्व-व्याप्यत्वाद् व्यापकं सविषयत्वं निर्विषयक-नित्यज्ञानाद् व्यावर्त्तमानं तस्य ज्ञानत्वमपि व्यावर्त्तयतीति न निर्विषयक-नित्यविज्ञानस्यात्मत्वसिद्धिरिति भावः। ननु सर्वविषयक-विज्ञानं यत्किञ्चिद्विषयकं वा विज्ञानमात्मेति न ब्रूमः, किन्तु सविषयकविज्ञानमात्मेति ब्रूमः, अतो नोक्तदोषावकाश इति चेत्तत्राह—**सविषयक**त्वस्यापीति। **अननुभवा**दिति। सविषयकस्य नित्यविज्ञानस्यात्मत्वे सविषयकत्वेन तदनुभवः स्यात्, घटस्य ज्ञानमित्याद्यनुभववत्। नच तथा। न ह्यात्मा घटादिविषयकोऽपि तु घटादिविषयकज्ञानवानित्येवानुभवादिति भावः। **अतः**—सविषयक-नित्यविज्ञानस्यात्मत्वासम्भवात्। नन्वेवं जीवस्य विज्ञाना-

মৈত্রেয়ী! এই আত্মা অবিনাশী) এবং "সত্যং জ্ঞানমনন্তং ব্রহ্ম" (ব্রহ্ম—আত্মা সত্য, জ্ঞান ও অনন্ত অর্থাৎ ত্রিবিধ পরিচ্ছেদশূন্য) এই সমস্ত শ্রুতি [প্রমাণ] রহিয়াছে অর্থাৎ এই সমস্ত শ্রুতিতে নিত্যবিজ্ঞানকেই আত্মা বলা হইয়াছে—এই যদি বলি। [উঃ] না—তাহা বলা যায় না। কারণ সেই নিত্য বিজ্ঞানের সবিষয়ত্ব সম্ভব নহে বলিয়া [পূর্ব্বে] প্রদর্শিত হইয়াছে। নির্বিষয় বস্তুর জ্ঞানত্বে কোন প্রমাণ নাই। আর [আত্মাতে] সবিষয়ত্বেরও অনুভব নাই। অতএব আত্মা বিজ্ঞানাদিভিন্ন

### বিবৃতি

বিজ্ঞানমাত্রই সবিষয়ক বলিয়া নিত্যবিজ্ঞানও সবিষয়ক। যদি নিত্য-বিজ্ঞানই আত্মা হয়, তবে সর্ববিষয়ক নিত্যবিজ্ঞান অথবা যৎকিঞ্চিদ্বিষয়ক নিত্যবিজ্ঞান আত্মা—ইহা বলিতে হইবে। যদি সর্ববিষয়ক নিত্যবিজ্ঞানই আত্মা বলা হয়, তবে

**आत्मेति सिद्धम्। 'सत्यं ज्ञान'मिति ब्रह्मपरं जीवे तु नोपयुज्यते। ज्ञानाज्ञान-**

दिभिन्नत्वे सत्यादिश्रुतिविरोधः, तत्रात्मनो विज्ञानरूपत्वाभिधानादिति चेत्, तत्राह—**सत्यं** ज्ञानमिति। **ब्रह्मपरं** ब्रह्मपदसामानाधिकरण्यात् तात्पर्येण ब्रह्मस्वरूपप्रतिपादकम्। तथा चेयं ब्रह्मपरा श्रुतिर्ब्रह्मणो ज्ञानरूपत्वं प्रतिपादयन्त्यपि जीवस्य ज्ञानरूपत्वं न प्रतिपादयति, तत्र तत्तात्पर्याभावात्। तस्मान्न श्रुतिविरोध इति भावः। ननु जीव-ब्रह्मणोरैक्याज् जीवस्य ज्ञानस्वरूपत्वमित्यतो जीव-ब्रह्मणोर्भेदं साधयति—**ज्ञानाज्ञाने**ति। **सुखित्वा-**

ও নিত্য—ইহা সিদ্ধ হয়। 'সত্যং জ্ঞানং—এই শ্রুতি ব্রহ্মপর অর্থাৎ ব্রহ্ম-স্বরূপের প্রতিপাদক, জীবে কিন্তু ইহা উপযোগী নহে অর্থাৎ উহা জীবস্বরূপের প্রতিপাদক নহে। সুতরাং উহা দ্বারা জীবের জ্ঞানস্বরূপত্ব সিদ্ধ হয় না। জ্ঞান ও অজ্ঞান

**বিবৃতি**

আত্মা সর্বজ্ঞ হইয়া পড়িবে। অথচ কোন আত্মাই সর্বজ্ঞ নহে। সুতরাং সর্ববিষয়ক নিত্যবিজ্ঞানকে আত্মা বলা যায় না। যৎকিঞ্চিদ্ বিষয়ক নিত্যবিজ্ঞানকে আত্মা বলিলে এই দোষ হয় না বটে; কিন্তু কি বিষয়ক নিত্যবিজ্ঞান আত্মা হইবে, তাহা যখন নিরূপণ করা যায় না, তখন যৎকিঞ্চিৎ বিষয়ক নিত্যবিজ্ঞানকেও আত্মা বলা যায় না। আরও কথা, সবিষয়ক নিত্যবিজ্ঞান আত্মা হইলে আত্মাকে জ্ঞানের ন্যায় সবিষয়ক বলিয়াই অনুভব হইত। কিন্তু আত্মা সবিষয়ক বলিয়া অনুভূত হয় না। সুতরাং সবিষয়ক নিত্যবিজ্ঞানও আত্মা নহে। নির্বিষয়ক বিজ্ঞানের অস্তিত্ব নাই বলিয়া উহা আত্মা হইতে পারে না। অতএব ক্ষণিক বিজ্ঞান বা নিত্যবিজ্ঞান ভিন্ন কোন নিত্য বস্তুকেই আত্মা বলিতে হইবে। এই অভিপ্রায়ে বলিলেন—**বিজ্ঞানাদি-ভিন্নো নিত্য আত্মেতি সিদ্ধম্।**

অদ্বৈত বেদান্তীর মতে জ্ঞানস্বরূপ ব্রহ্ম অনাদি অবিদ্যার সহিত অনাদি কাল হইতে মিলিত হইয়া জীবনামে অভিহিত ও ব্যবহৃত হইয়া থাকেন। বিভিন্ন উপাধির যোগে একই ব্রহ্ম জীব, ঈশ্বর প্রভৃতি বিভিন্ন নামে আখ্যাত হন। সুতরাং জীব, ঈশ্বর প্রভৃতি অবিদ্যাকল্পিত রূপ, বাস্তবরূপ নহে। তত্ত্বজ্ঞানের দ্বারা অবিদ্যার নিবৃত্তি হইলে অবিদ্যাকল্পিত জীব, ঈশ্বর প্রভৃতি নাম ও রূপের নিবৃত্তি হয়। তখন ব্রহ্ম স্ব-স্বরূপে অবস্থান করেন। স্ব-স্বরূপে অবস্থানকালে তাঁহাকে ব্রহ্ম বলা হয়, জীব বা ঈশ্বর প্রভৃতি বলা হয় না। সুতরাং এইমতে জীব ও ব্রহ্ম এক। ব্রহ্ম জ্ঞানস্বরূপ বলিয়া তদভিন্ন জীবও জ্ঞানস্বরূপ। অতএব তাঁহাদের মতে আত্মা নিত্যবিজ্ঞান স্বরূপ। "অয়মাত্মা ব্রহ্ম" ইত্যাদি শ্রুতিও জীবকে ব্রহ্মাভিন্ন জ্ঞানস্বরূপ বলিয়াছেন।

**सुखित्वादिभिर्जीवानां भेदसिद्धौ सुतरामीश्वरभेदः, अन्यथा बन्धमोक्ष-व्यवस्थानुपपत्तेः। योऽपीश्वराभेदबोधको वेदः, सोऽपि तदभेदेन तदीयत्वं प्रतिपादयन्**

दीत्यादिना दुःखित्वपरिग्रहः। कस्यचिज् जीवस्य ज्ञानं कस्यचिच्चाज्ञानं कस्यचित् सुखं कस्यचिच्च दुःखमिति भावः। **भेदसिद्धा**विति। यद् युगपद्विरुद्धधर्माध्यस्तं, तन्नानेति नियमाद् ज्ञानाज्ञानादीनां विरुद्धधर्माणामेकत्र समवायादिति भावः। **सुतरा**मिति। एकस्येश्वरस्याऽनेकजीवाभेदासम्भवात, एकत्वानेकत्वयोरेकत्र विरोधादिति भावः। **ईश्वरभेदः**—ईश्वरजीवात्मनोर्भेदः। **अन्यथा**—ईश्वरस्य जीवात्मकत्वे। **बन्धमोक्षे**ति। कश्चित् संसारी बद्धः, कश्चिन्मुक्त इति व्यवस्थानुपपत्तिः स्यात्, बद्धमुक्तात्मनोरेकेश्वराभेदेनैक्यादिति भावः। नन्वेवं सति जीव-ब्रह्मणोरभेदबोधकानां तत्त्वमस्यादिवाक्यानां का गतिरिति चेत्, तत्राह—**योऽपी**ति। **तदभेदेन तदीयत्व**मिति। तत्सम्बद्धित्वेन तदभेदमित्यर्थः।

সুখিত্ব ও দুঃখিত্ব প্রভৃতি ধর্ম্মের দ্বারা জীবসমূহের পরস্পর ভেদ সিদ্ধ হইলে [ অনেক জীবের সহিত এক ঈশ্বরের অভেদ সম্ভব নহে বলিয়া ] সুতরাং জীব ও ঈশ্বরের ভেদ সিদ্ধ হইবে। অন্যথা অর্থাৎ জীব ও ঈশ্বর এক হইলে বন্ধ ও মোক্ষের ব্যবস্থা অনুপপন্ন হইবে অর্থাৎ কোন জীব বদ্ধ, কোন জীব মুক্ত—এই ব্যবস্থা যুক্তিযুক্ত হইবে না। কারণ সমস্ত জীব ঈশ্বরস্বরূপ বলিয়া এক। আর—জীব ও ঈশ্বরের অভেদ-বোধক যে বেদও আছে [বলিয়াছ] ; সেই বেদও ঈশ্বরের অভেদ [প্রতিপাদন] দ্বারা [ জীবে ] তদীয়ত্ব অর্থাৎ তৎস্বরূপত্ব ( ঈশ্বরের আত্মীয়তা ) প্রতিপাদন করিয়া প্রশংসা

**বিবৃতি**

জাব ও ব্রহ্ম এক হইলে ইহা বলা যায় বটে ; কিন্তু জীব ও ব্রহ্ম এক নহেন। জীবে জ্ঞান, অজ্ঞান, সুখদুঃখ প্রভৃতি পরস্পর বিরুদ্ধ ধর্মের সমাবেশ হওয়ায় কোন জীব বিজ্ঞ, কোন জীব অজ্ঞ, কোন জীব সুখী, কোন জীব দুঃখী হইয়াছে। ইহা হইতে বুঝা যায়—জীবসমূহ পরস্পর বিভিন্ন ও অসংখ্য। জীবসমূহ পরস্পর বিভিন্ন হইলে এক ঈশ্বর বা ব্রহ্মের সহিত তাহাদের অভেদ হইতে পারে না। যদি এক ঈশ্বরের সহিত সমস্ত জীবের অভেদ হইত, তবে জীবসমূহও পরস্পর এক হইয়া যাইত। তাহা হইলে কোন জীব বদ্ধ, কোন জীব মুক্ত—এইরূপ বদ্ধ-মুক্ত ব্যবস্থার ভেদ হইত না। বদ্ধ, মুক্ত, বিজ্ঞ, অজ্ঞভেদে জীবসমূহ ভিন্ন হইলে ঈশ্বরও তাহা হইতে ভিন্ন হইবেন। তাহা হইলে নিত্য বিজ্ঞানই আত্মা—ইহা বলা যাইবে না। এই অভিপ্রায়ে বলিলেন—**অন্যথা বন্ধমোক্ষব্যবস্থানুপপত্তেঃ।**

**स्तौति, अभेदभावनयैव यतितव्यमिति वदति। अत एव "सर्व एत आत्मानः समर्पिता" ( बृः २।५ ) इति श्रूयते। मोक्षदशायामज्ञान-निवृत्तावभेदो जायत इत्यपि न, भेदस्य नित्यत्वेन नाशासम्भवात्, भेदनाशेऽपि व्यक्तिद्वयं स्यास्युत्येव।'**

नेदं वाक्यं जीवेश्वरयोरभेदपरं, तयोर्भेदस्य बलवत्तर-प्रत्यक्षादि-प्रमाणसिद्धत्वात्, सति च भेदे वास्तवाभेदासम्भवात्। तथा च ममात्मा भद्रसेन इतिवदीश्वरानुरक्तिप्रतिपादकत्वेनौपचारिकोऽयमभेदः, न वास्तव इति मन्तव्यम्। **अभेद**भावनयैव—अभेदोपासनयैव। उपासना च चेतसः समानाकारप्रत्ययप्रवाहः, ध्यानमिति यावत्। **अत एव**—अभेद-वाक्यानामीश्वरानुरक्तिप्रतिपादकत्वादेव। **आत्मानो** जीवाः। **समर्पिताः**—ईश्वरोपासनायां नियुक्ताः। मुक्तावभेदं मन्यमानानां भेदाभेदवादिनां भट्टभास्करादीनां मतं निराकरोति—**मोक्ष**दशायामिति। **अभेदो** जायत इति। अभेदविरोधिनो भेदस्याविद्योपादेयस्याज्ञाननिवृत्तौ निवृत्तिः। ततश्च जीवब्रह्मणोरभेदोपासनयाभेदोत्पत्तिः। तथा च सिद्धं जीवस्य ब्रह्माभेदाद् ब्रह्मरूपत्वं ज्ञानरूपत्वञ्चेति भावः। नन्वेवं स्याद्, यद्यभेदविरोधिनो भेदस्य नाशः स्यात्। स एव तु नोपपद्यते, तस्य नित्यत्वादित्याह—**भेदस्ये**ति। ननु भेदस्य नित्यत्वमयुक्तम्, अविद्यापरतन्त्रस्यानुयोगिप्रतियोगिपरतन्त्रस्य वा तस्य तन्निवृत्तौ निवृत्त्यौचित्यादित्याह—**भेदनाशे**ऽपीति। भेदसत्वे व्यक्तिद्वयसत्त्वं निर्विवाद-

করিতেছে—[ মুমুক্ষুর ] অভেদ উপাসনায় যত্নবান্ হওয়া উচিত—ইহাই বলিতেছে। এই কারণেই অর্থাৎ অভেদ-বোধক বাক্যগুলির ঈশ্বরানুরাগ প্রতিপাদনেই তাৎপর্য্য, অভেদ প্রতিপাদনে তাৎপর্য্য নহে বলিয়া [ লোকেও ] এইরূপ কথিত হইয়া থাকে—সমস্ত জীব [ ঈশ্বর সেবায় ] সমর্পিত ( নিযুক্ত ) হইয়াছে। মোক্ষকালে অজ্ঞাননিবৃত্ত হইলে অভেদ উৎপন্ন হয়—ইহাও সম্ভব নহে। কারণ ভেদের নিত্যত্বহেতু নাশ হইতে পারে না। আর ভেদ-নাশ হইলেও ব্যক্তি দুইটী ত

**বিবৃতি**

ভেদ ও অভেদ পরস্পর বিরুদ্ধ। যতক্ষণ জীব ও ঈশ্বরের পরস্পর ভেদ থাকিবে; ততক্ষণ তাহাদের অভেদ হইতে পারে না। নৈয়ায়িকমতে ঐ ভেদ নিত্য, উহা চিরকালই থাকিবে। সুতরাং জীব ও ঈশ্বরের মধ্যে কোন দিনই অভেদ উৎপন্ন হইবে না। অবিদ্যার নিবৃত্তিতে অবিদ্যাকল্পিত ভেদের নিবৃত্তি হইলেও জীব ও ঈশ্বররূপ দুইটী ব্যক্তি তো থাকিবেই। দুইটী ব্যক্তি থাকিলেই তাহাতে দ্বিত্বসংখ্যাও থাকিবে। দ্বিত্ববিশিষ্ট ব্যক্তি থাকিলেই ভেদও থাকিবে। কারণ দ্বিত্বাদি সংখ্যা-

**न च द्वित्वमपि नश्यतीति वाच्यम्, तव निर्धर्मके ब्रह्मणि सत्यत्वाभावेऽपि सत्य-स्वरूपं तदितिवद् द्वित्वाभावेऽपि व्यक्तिद्वयात्मकौ ताविति सुवचत्वात्। मिथ्यात्वा-**

मित्यपिना सूचितम्। **व्यक्तिद्वय**मिति। जीवब्रह्मरूपव्यक्तिद्वयमित्यर्थः। यथापेक्षाबुद्धि-नाशाद् द्वित्वे विनष्टे व्यक्तिद्वयं तिष्ठति, तद्वद् जीवब्रह्मणोर्भेदनाशेऽपि तद्द्वयं तिष्ठत्येव। तथा चान्योन्याभावरूपस्य पृथक्त्वरूपस्य वा भेदस्य नाशेऽपि द्वित्वविशिष्टवस्तुस्वरूपस्य भेदस्य सत्त्वाद् जीवब्रह्मणोर्नाभेद इति गूढ़ाशयः। ननु द्वित्वसत्त्वे द्वयं स्यात्। तदेव तु तदानीं न तिष्ठति, अपेक्षाबुद्धेर्नाशेन नाशात्। तथा चापेक्षाबुद्धेर्नाशाद् द्वित्वे नष्टे द्वित्व-विशिष्टद्वयस्थितिर्न सम्भवतीति जीवब्रह्मणोर्नाभेदसिद्धिरिति पूर्वपक्षाशयमुद्घाट्य परिहरति —**न च द्वित्व**मपीति। अपिना भेदसमुच्चयः। स्वाशयमुद्घाट्य परिहाररहस्यमाह— **तवे**ति। वेदान्तिन इत्यर्थः। **सत्यत्वा**भावेऽपीति। ब्रह्मणो निर्धर्मकत्वात् सत्यत्वस्य च धर्मत्वाद् ब्रह्मणि सत्यत्वाभाव इति भावः। **सत्य**स्वरूपमिति। "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुतौ

থাকেই। দিত্বও নাশ হয় অর্থাৎ দ্বিত্ব নাশ হওয়ায় ব্যক্তি দুইটীও থাকে না— ইহাও বলিতে পার না। কারণ তোমার (বেদান্তীর) নির্ধর্ম্মক ব্রহ্মে সত্যত্বের অভাবেও অর্থাৎ সত্যত্ব ধর্ম্ম না থাকিলেও সেই ব্রহ্ম যেরূপ সত্যস্বরূপ হন, সেইরূপ [আমার মতে] দ্বিত্বের অভাবেও অর্থাৎ জীব ও ঈশ্বরে দ্বিত্ব না থাকিলেও দুইটী ব্যক্তিস্বরূপ সেই জীব ও ঈশ্বর থাকিবে—ইহাও স্বচ্ছন্দে বলিতে পারি। যদি বল— সেই ব্রহ্মে সত্যত্ব হইতেছে অধিকরণস্বরূপ মিথ্যাত্বাভাব অর্থাৎ ব্রহ্মে যে সত্যত্ব

**বিবৃতি**

বিশিষ্ট ব্যক্তিটীই হইতেছে ভেদ। তাৎপর্য্য এই যে, অন্যোন্যাভাবরূপ বা পৃথক্ত্বরূপ ভেদ নিবৃত্ত হইলেও দ্বিত্বাদি সংখ্যাবিশিষ্ট ব্যক্তিরূপ ভেদ নিবৃত্ত না হওয়ায় জীব ও ঈশ্বরের অভেদ হইতে পারে না। যদি অপেক্ষাবুদ্ধির নাশে দ্বিত্ব-সংখ্যার নাশ হওয়ায় দ্বিত্ববিশিষ্ট নাই থাকে; তথাপি দুইটী ব্যক্তি থাকিবে। ব্যক্তির বিশেষণ সংখ্যা ও ব্যক্তি এক নহে। সুতরাং বিশেষণ সংখ্যার নাশ হইলেও বিশেষ্য ব্যক্তি থাকিতে পারে। দ্বিত্ব সংখ্যা থাকিলেই ব্যক্তিদ্বয় থাকিবে, নচেৎ থাকিবে না— এইরূপ নিয়মও নাই। নির্ধর্মক ব্রহ্মে সত্যত্ব ধর্ম না থাকিলেও তিনি যেমন সত্য-স্বরূপ থাকেন, সেইরূপ জীব ও ঈশ্বররূপ ব্যক্তিদ্বয়ে দ্বিত্বসংখ্যা না থাকিলেও সেই সেই ব্যক্তিদ্বয় থাকিতে পারে। ব্যক্তিদ্বয় থাকিলে সেই দুইটী ব্যক্তির অভেদ কখনই হইবে না। এই অভিপ্রায়ে বলিলেন—**ব্যক্তিদ্বয়াত্মকৌ তাবিতি সুবচত্বাৎ।**

**भावोऽधिकरणात्मकस्तत्र सत्यत्वमिति चेत्। एकत्वाभावो व्यक्तिद्वयात्मको द्वित्वमित्यप्युच्यताम्। प्रत्येकमेकत्वेऽपि पृथिवीजलयोर्न गन्ध इति इतिवदुभयं**

ब्रह्मणः सत्यस्वरूपत्वाभिधानादिति भावः। **तद्**—ब्रह्म। ननु सत्यत्वाभावेऽपि सत्यं चेत् द्वित्वाभावेऽपि द्वयं स्यात्। न च ब्रह्मणि सत्यत्वाभावः, तत्र सत्यत्वसत्त्वात्, तस्य च मिथ्यात्वाभावरूपत्वात्, अभावस्य चाधिकरणानतिरिक्तत्वात्। तथा च मिथ्यात्वाभावरूपस्य सत्यत्वस्य सत्यस्वरूपत्वात् सत्यस्वरूपस्य च सत्यत्वधर्मानपेक्षत्वात् तस्य सत्यस्वरूपत्वं नानुपपन्नम्। द्वित्वं तु नैवं, तस्य गुणत्वेन धर्मत्वात्, द्वयस्य च द्वित्वसापेक्षत्वात्। तत् कथं द्वित्वनाशे तदधीनस्थितिकस्य द्वयस्यावस्थानमित्याशङ्कते—**मिथ्यात्वाभाव** इति। **तत्र**—ब्रह्मणि। सिद्धान्ती समाधत्ते—**एकत्वाभाव** इति। तथा च द्वित्वाभावस्य द्वयस्थितिविरोधित्वेऽप्येकत्वाभावरूपस्य द्वयस्वरूपस्य द्वित्वस्य व्यक्तिद्वयाविरोधाद् द्वित्वसंख्याभावेऽपि व्यक्तिद्वयसत्त्वे बाधकाभाव इति भावः। नन्वेकत्वाधिकरणे व्यक्तिद्वये कथं तदभावरूपं द्वित्वमत आह—**प्रत्येक**मिति। एकं खल्वेकत्वाधिकरणं नोभयम्। तथा

আছে, উহা কোন ভাবরূপ ধর্ম্ম নহে। বেদান্তীর মতে মিথ্যাত্বাভাবই সত্যত্ব এবং অভাব অধিকরণস্বরূপ বলিয়া উহা ব্রহ্মস্বরূপ, ব্রহ্মের ধর্ম্ম নহে। সুতরাং ব্রহ্মে, সত্যত্বরূপ ভাবভূত ধর্ম্ম না থাকিলেও ব্রহ্ম সত্য হইতে পারে। [তবে] ইহাও বলিতে পারি—দ্বিত্ব হইতেছে ব্যক্তিদ্বয়স্বরূপ একত্বাভাব অর্থাৎ দ্বিত্বটী সংখ্যা নহে, কিন্তু একত্বাভাবই দ্বিত্ব এবং অভাব অধিকরণস্বরূপ বলিয়া উহাও ব্যক্তিদ্বয়স্বরূপ। সুতরাং দুইটী ব্যক্তিতে দ্বিত্বসংখ্যা না থাকিলেও একত্বাভাবরূপ দ্বিত্ব থাকায় জীব ও ঈশ্বর দুইটী ব্যক্তি থাকিতে পারে। [পৃথিবীতে গন্ধ থাকিলেও] পৃথিবী ও জল—এই উভয়ে গন্ধ নাই—ইহা যেমন সকলের প্রসিদ্ধ অর্থাৎ উক্ত প্রতীতি অনুসারে পৃথিবীতে যেরূপ গন্ধের অভাব সিদ্ধ হইয়া থাকে। সেইরূপ প্রত্যেকে একত্ব

### বিবৃতি

সত্যত্ব না থাকিলেও যদি সত্য বস্তু থাকিত, তবে দ্বিত্ব না থাকিলেও ব্যক্তিদ্বয় থাকিতে পারিত। প্রকৃতপক্ষে ব্রহ্মে সত্যত্ব আছে বলিয়াই তিনি সত্য। তবে এই সত্যত্বটী কোন ভাবভূত ধর্ম নহে। উহা মিথ্যাত্বাভাবস্বরূপ। অভাব অধিকরণ হইতে অতিরিক্ত নহে বলিয়া মিথ্যাত্বাভাবটী অধিকরণ ব্রহ্মস্বরূপ। সুতরাং সত্যত্বরূপ ভাবভূত ধর্ম ব্রহ্মে না থাকিলেও মিথ্যাত্বাভাবরূপ সত্যত্ব বিদ্যমান বলিয়াই

नैकमित्यस्य सर्वजनसिद्धत्वात्। योऽपि तदानीमभेदप्रतिपादको वेदः, सोऽपि निर्दुःखत्वादिना साम्यं प्रतिपादयति, सम्पदाधिक्ये पुरोहितोऽयं राजा संवृत्त इतिवत्। अत एव "निरञ्जनः परमं साम्यमुपैती"ति (मुः ३।३) श्रूयते। ईश्वरो-

चैकत्वानधिकरणे उभये एकत्वाभावरूप-द्वित्वसत्त्वे बाधकाभाव इति भावः। **तदानीं** मोक्षे। **वेदः**—ब्रह्म वेद ब्रह्मैव भवतीत्यादिरूपः। **साम्यं**—ब्रह्मसाम्यम्। साम्यबोध-तात्पर्येणाभेदार्थकवाक्यप्रयोगस्योदाहरणमाह—**सम्पदाधिक्य** इति। **इतिवदिति।** यथा राजपुरोहितयोः सत्यपि भेदे साम्यादभेदव्यवहार अयं राजेति। तथा जीवब्रह्मणो-र्भेदेऽपि साम्यादभेदव्यवहार अयमात्मा ब्रह्मेतीति भावः। **अत एव**—ब्रह्म वेद ब्रह्मैव भवतीति श्रुतेः साम्यप्रतिपादकत्वादेव। **निरञ्जनः**—निदुःखः। **परमम्**—अपरा-

থাকিলেও 'উভয় এক নহে' ইহাও সেইরূপ সকলের প্রসিদ্ধ অর্থাৎ উক্ত প্রতীতি অনুসারে একত্বের অধিকরণে উভয়ে একত্বাভাবরূপ দ্বিত্ব সিদ্ধ হইবে। সম্পৎ অধিক হইলে [ লোকে যেমন বলে ] "এই পুরোহিত রাজা হইয়াছেন,—ইহা যেমন [রাজা ও পুরোহিতের] সাম্য প্রতিপাদন করে। তদ্রূপ মোক্ষকালে অভেদ-বোধক যে বেদ অর্থাৎ মোক্ষকালে অভেদ উৎপন্ন হয়—ইহা যে বেদবাক্য বলে—সেই বেদও নিদুঃখ-ত্বাদিরূপে অর্থাৎ মোক্ষকালে জীব ও ঈশ্বর—উভয়ে সুখ-দুঃখাদি-রহিত বলিয়া অদুঃখী ও অসুখি-রূপে [ জীব ও ঈশ্বরের ] সাম্য প্রতিপাদন করে। এইজন্যই "নিরঞ্জনঃ পরমং সাম্যমুপৈতি" অর্থাৎ জীব দুঃখরহিত হইয়া পরম সাম্য প্রাপ্ত হয়—এই শ্রুতিও

### বিবৃতি

ব্রহ্ম সত্যস্বরূপ—এই যদি বেদান্তী বলেন। তবে আমরাও বলিতে পারি—দ্বিত্বটী কোন ভাবভূত গুণ নহে। উহা একত্বাভাবস্বরূপ। অভাব অধিকরণ স্বরূপ হইলে একত্বাভাবরূপ দ্বিত্বও অধিকরণ ব্যক্তিদ্বয় স্বরূপ হইবে। দ্বিত্বসংখ্যার অভাবে দ্বয় থাকিতে না পারিলেও একত্বাভাবরূপ দ্বিত্ব দ্বয়স্বরূপ বলিয়া এবং উহা আছে বলিয়া দ্বয়ও থাকিবে। 'পৃথিবী ও জল—এই উভয়ে গন্ধ নাই'—এই প্রতীতি অনুসারে পৃথিবীতে গন্ধ থাকিলেও যেমন গন্ধের অভাব সিদ্ধ হয়, 'তদ্রূপ উভয় এক নয়',—এই প্রতীতি অনুসারে প্রতি ব্যক্তিতে একত্ব থাকিলেও একত্বের অভাব সিদ্ধ হয়। সুতরাং একত্বাভাবরূপ দ্বিত্ব বিদ্যমান থাকায় জীব ও ঈশ্বররূপ ব্যক্তিদ্বয় থাকিবে। তাহা হইলে তাহাদের অভেদ কখনই উৎপন্ন হইবে না। অতএব জীব ও ঈশ্বর ভিন্ন। এই অভিপ্রায়ে বিশ্বনাথ বলিলেন—**উভয়ং নৈকমিত্যস্য সর্বজনসিদ্ধত্বাৎ।**

**ऽपि न ज्ञानसुखात्मा, किन्तु ज्ञानाद्याश्रयः; "विज्ञानमानन्दं (बृः ३।९।२८) ब्रह्म"त्यादौ विज्ञानपदेन ज्ञानाश्रय एवोक्तः, "यः सर्वज्ञः सर्ववित्" (मुः १।१।९) इत्याद्यनुरोधात्। आनन्दमित्यस्याप्यानन्दवदित्यर्थः; अर्श आदित्वान्मत्वर्थीयो-**

वृत्तिरूपम्। ईश्वरस्य ज्ञानस्वरूपत्वे बाधकमाह—**ईश्वरो**ऽपीति। **ज्ञानाद्याश्रय** इति। विज्ञानमस्मिन्नस्तीत्यधिकरणार्थक-ल्युट्-प्रत्ययनिष्पन्नेन विज्ञानपदेन विज्ञानाश्रयत्वबोधनादिति भावः। ननु विज्ञानपदस्य भावार्थकत्वं कथं नेति चेत्, तत्राह—**यः सर्वज्ञ** इति। तथा च सर्वज्ञश्रुतिर्हीश्वरस्य ज्ञानवत्तामाह, विज्ञानश्रुतिस्तु विज्ञानरूपतामिति परस्पर-विरोधः, अतः सर्वज्ञश्रुत्यनुरोधाद् विज्ञानश्रुतेस्तथैवार्थ कल्पनाद् नानयोर्विरोध इति भावः। **इत्यादी**ति। आदिना "यस्य ज्ञानमयं तप" इत्यादिश्रुतेः परिग्रहः। नन्वेवमानन्दश्रुतिविरोध इति चेत्, तत्राह—**आनन्द**मिति। आनन्दश्रुतिर्हीश्वरस्यानन्दवत्तामाह, नानन्दरूपताम्, आनन्दमिति नपुंसकत्व-श्रवणादिति भावः। नन्वानन्दशब्दस्यानन्दवदित्यर्थो न युक्तः, आनन्दवाचकात् तस्मादानन्दमात्रस्यैव बोधनादित्यत आह—**मत्वर्थीय** इति। तदस्यास्तीत्यर्थे मतुबादीनामिव "अर्श आदिभ्योऽजि"ति सूत्रेणाच्-

দেখা যায়। আর—ঈশ্বরও জ্ঞান বা সুখ-স্বরূপ নহেন, কিন্তু [ তিনি ] জ্ঞান প্রভৃতির আশ্রয়। যেহেতু "যঃ সর্ব্বজ্ঞঃ সর্ব্ববিৎ" অর্থাৎ যিনি সর্ব্ববিষয়ের সামান্য জ্ঞানবান্, সর্ব্ববিষয়ের বিশেষজ্ঞানবান্—এই শ্রুতির অনুরোধ আছে অর্থাৎ এই শ্রুতিতে ঈশ্বর-জ্ঞানবান্ বলিয়া উক্ত হওয়ায় "বিজ্ঞানানন্দং ব্রহ্ম"—এই শ্রুতিতে বিজ্ঞানপদের দ্বারা জ্ঞানাশ্রয়ই উক্ত হইয়াছে। "আনন্দম্" এই পদেরও অর্থ—আনন্দবান্। "অর্শআদিত্বাদচ্"

### বিবৃতি

বেদান্তী ঈশ্বরকে সত্য, জ্ঞান এবং আনন্দস্বরূপ বলিলেও প্রকৃতপক্ষে ঈশ্বর জ্ঞানস্বরূপ বা আনন্দস্বরূপ নহেন। তিনি জ্ঞান ও আনন্দের আশ্রয়। "যঃ সর্বজ্ঞঃ সর্ববিৎ" ইত্যাদি শ্রুতিও ঈশ্বরকে জ্ঞানাশ্রয়ই বলেন। তাৎপর্য্য এই যে, সর্বং জানাতি—এই অর্থে সর্বপূর্বক জ্ঞা ধাতুর উত্তর কিপ্ প্রত্যয়যোগে নিষ্পন্ন সর্বজ্ঞ শব্দে সর্ববিষয়কজ্ঞানকর্ত্তাকে বুঝায়। কিন্তু ঈশ্বরের নিত্য জ্ঞানের কর্ত্তা কেহ নাই বলিয়া ঐ অর্থে সর্বজ্ঞশব্দটী ঈশ্বরের বিশেষণরূপে প্রযুক্ত হইতে পারে না। এইজন্য এস্থলে 'জানাতি' এই আখ্যাতের আশ্রয়ত্ব অর্থই গ্রহণ করিতে হইবে। তাহা হইলে সর্ব্বজ্ঞশব্দে সর্ব্ববিষয়ক জ্ঞানবান্‌কেই বুঝাইবে। সর্ব্বজ্ঞ শ্রুতিতে সর্ব্বজ্ঞ শব্দটী

ऽच्-प्रत्ययः, अन्यथा पुंलिङ्गत्वापत्तेः। आनन्दोऽपि दुःखाभावे उपचर्यते, भाराद्यपगमे सुखी संवृत्तोऽहमितिवत्। अस्तु वा तस्मिन्नानन्दो न त्वसौ आनन्दः,

प्रत्ययविधानात् तदन्तस्यानन्दशब्दस्यानन्दवदित्यर्थो लभ्यते इति भावः। **अन्यथा** आनन्दशब्दादच्प्रत्ययानङ्गीकारे। **पुंलिङ्गत्वा**पत्तेरिति। "स्यादानन्दथुरानन्द" इति कोशेन तस्य नित्यपुंलिङ्गत्वावधारणादिति भावः। नन्वानन्दमित्यस्यानन्दवदित्यर्थोऽपि न युक्तस्तव मते ईश्वरे आनन्दाभावात्, आनन्दस्य पुण्यफलत्वात्, तस्य च पुण्यस्य तत्राभावादत आह—**आनन्दो**ऽपीति। **उपचर्य**त इति। लक्षणया प्रयुज्यते इत्यर्थः। तथा चायमानन्दशब्दो लक्षणया दुःखाभाव-बोधको न त्वानन्दबोधकः, पुण्यफलस्यानन्दस्य तत्राभावादिति भावः।

नन्वानन्दशब्दस्य दुःखाभाववति लक्षणा नैव युक्ता, तत्र शक्यसम्बन्धाभावात्, प्रयोगाभावाच्चेत्यत आह—**भाराद्य**पगम इति। वहनीयभारादिनिवृत्तावित्यर्थः। आदिना तज्जन्य-दुःखपरिग्रहः। द्विसहस्रपलं **भारः**, तुला स्त्रियां पलशतं भारः स्याद् विंशतिस्तुले"ति कोशात्। सम्भवति मुख्येऽर्थे लक्षणाश्रयणमन्याय्यमिति चेत्, तत्राह—**अस्तु** वेति। नित्यज्ञानादिवन्नित्यसुखमप्यस्त्वित्यर्थः। **आनन्दः**—आनन्दस्वरूपः।

—এই সূত্রানুসারে [ আনন্দপদে ] মত্বর্থীয় অচ্ প্রত্যয় হইয়াছে। ইহা স্বীকার না করিলে [আনন্দপদের] পুংলিঙ্গত্বের আপত্তি হইবে। [সুখ উৎপন্ন না হইলেও কেবল] ভার বা দুঃখ প্রভৃতির নিবৃত্তি হইলে "অহং সুখী সংবৃত্ত" অর্থাৎ আমি সুখী হইলাম—ইহা যেরূপ [ আরোপিত ] হইয়া থাকে, তদ্রূপ আনন্দও দুঃখাভাবে উপচরিত হইয়া থাকে। আচ্ছা, ঈশ্বরে না হয় আনন্দ থাকুক, কিন্তু তিনি আনন্দস্বরূপ নহেন · কারণ

**বিবৃতি**

যদি সর্ব্ববিষয়ক জ্ঞানবান্ অর্থেই প্রযুক্ত হয় এবং ঐ শ্রুতিদ্বারা যদি ঈশ্বরকে সর্ববিষয়ক জ্ঞানবান্ বলিয়া জানা যায়, তবে "বিজ্ঞানমানন্দং ব্রহ্ম" এই শ্রুতিতে বিজ্ঞানপদটীও "বিজ্ঞানমস্মিন্নস্তি" এই অর্থেই প্রযুক্ত হইয়াছে এবং ইহা দ্বারা বিজ্ঞানাশ্রয়কেই বুঝাইতেছে, ইহা বুঝিতে হইবে। তাহা না হইলে এই উভয় শ্রুতির পরস্পর বিরোধ হইবে। এই বিরোধ পরিহারের জন্য সর্বজ্ঞ শ্রুতির অর্থানুসারেই বিজ্ঞানশ্রুতির বিজ্ঞানপদের বিজ্ঞানবান্ অর্থই নির্ণয় করিতে হইবে। এই অভিপ্রায় প্রকাশ করিতে বিশ্বনাথ বলিলেন—**"যঃ সর্বজ্ঞঃ সর্ববিৎ" ইত্যাদ্যনুরোধাৎ।**

**'असुख'मिति श्रुतेः। न विद्यते सुखं यस्येति कुतो नार्थ इति चेत्। न। क्लिष्ट-कल्पनापत्तेः, प्रकरणविरोधादानन्दमित्यत्र मत्वर्थीयाच्-प्रत्ययविरोधात्, "आनन्दं ब्रह्मणो विद्यादि"त्यत्र भेदस्य स्पष्टत्वाच्चेति संक्षेपः॥**

तत्र प्रमाणमाह—**असुख**मिति। असुखमित्यत्र नञा तत्पुरुषसमासेन ब्रह्मणि सुखभेद-बोधनादिति भावः। वेदान्ती शङ्कते—**न विद्यत** इति। नैयायिकः समाधत्ते—**ने**ति। **क्लिष्टकल्पना**पत्तेरिति। बहुव्रीहेरन्यपदार्थ-प्रधानतया तत्राऽन्यपदार्थलाभार्थं नञो लक्षणा स्यात्, मुख्यार्थसम्भवे तस्या अन्याय्यत्वात्। तत्पुरुषे तु नायं दोष इति भावः। अत्र . हेतुमाह—**प्रकरण**विरोधादिति। नञ्-तत्पुरुष-निष्पन्न-पदपरम्परा-पठितत्वमेव प्रकरणं, तद्विरोधादित्यर्थः। बृहदारण्यकेऽस्थूलादिवाक्ये सर्वत्र नञ्तत्पुरुषदर्शनेन तत्-सन्निधावेकस्याऽसुखमित्यस्य बहुव्रीहिनिष्पन्नत्वे प्रकरणविरोधादिति भावः। नन्वसुख-मित्यस्य सुखभेदार्थकत्वे वाक्यविरोधः स्यात्, तस्य च प्रकरणविरोधापेक्षया बलवत्त्वा-दतस्तत्र बहुव्रीहिग्रहणं न्याय्यमित्यतो लक्षणायां बाधकान्तरमाह—**आनन्द**मिति। **विरोधा**दिति। मत्वर्थीयाच्प्रत्ययनिष्पन्नेनानन्दशब्देनानन्दवदित्यर्थो लभ्यते, असुख-मित्यस्य बहुव्रीहिसमासाश्रयणे त्वानन्दाभाव इति द्वयोर्वाक्ययोर्विरोधः स्यात्। तत्पुरुष-समासाश्रयणे तु ब्रह्मणि सुखभेदबोधात्, सुखभेदवति सुखसत्त्वे बाधकाभावान्न विरोध इति भावः। नन्वस्त्येव विरोधः, भूमैव सुखमित्यादि-श्रुतौ तस्य सुखस्वरूपत्वाभिधानात, सुखस्वरूपस्य सुखभेदायोगादित्यत आह—**आनन्द**मिति। तथा च श्रुतिविरोधात् प्रत्यक्षविरोधाच्च स्वरूपश्रुतेरन्यार्थपरत्वं युक्तमिति भावः।

"অসুখং" এই শ্রুতি দেখা যায় অর্থাৎ 'অসুখং' এই শ্রুতিতে তিনি সুখভেদবান্ বলিয়া নিরূপিত হইয়াছেন। [ অসুখং পদের ] ন বিদ্যতে সুখং যস্য অর্থাৎ যাহাতে সুখ নাই—এই অর্থ কেন হয় না—অর্থাৎ এইরূপ অর্থই হইবে—এই যদি বলি। না—তাহা বলিতে পার না; কারণ ক্লিষ্ট কল্পনার অর্থাৎ বহুব্রীহি সমাসে অন্য পদার্থ বুঝাইবার জন্য নঞ্ পদে লক্ষণার আপত্তি হইবে, প্রকরণ-বিরোধ হইবে অর্থাৎ বৃহদা-রণ্যক উপনিষদের "অস্থূলম্ অনণু অদীর্ঘম্" এই সমস্ত পদের সকল পদেই নঞ্ তৎ-পুরুষ হইয়াছে। 'অসুখং' পদেও নঞতৎপুরুষ হইবে। অন্যথা নঞ্তৎপুরুষ সমাস-নিষ্পন্ন পদসমূহের মধ্যবর্ত্তী একটী পদে বহুব্রীহি সমাস স্বীকার করিলে প্রকরণ বিরোধ হইবে এবং 'আনন্দম্' এই স্থলে মত্বর্থীয় অচ্ প্রত্যয়ের সহিতও বিরোধ হইবে অর্থাৎ 'বিজ্ঞানমানন্দং ব্রহ্ম' এই শ্রুতিতে আনন্দ পদের ক্লীবলিঙ্গে প্রয়োগ, মতুবর্থে অচ্

**एतेन—प्रकृतिः कर्त्री, पुरुषस्तु पुष्करपलाशवन्निर्लेपः, किन्तु चेतनः। कार्य-कारणयोरभेदात् कार्यनाशे सति कार्यरूपतया तन्नाशोऽपि न स्यादित्यकारणत्वं तस्य, बुद्धिगत-चैतन्याभिमानान्यथानुपपत्त्या तत्कल्पनम्। बुद्धिश्च प्रकृतेः परि-**

सांख्यमतं दूषयितुमुपन्यस्यति—**एतेने**ति। पूर्वोक्तयुक्त्यात्मनो ज्ञानवत्त्वसाधनेन वक्ष्यमाणयुक्त्या चेत्यर्थः। **प्रकृतिः** मूलप्रकृतिः। सा च सत्त्वरजस्तमसां साम्यावस्था। उक्तं च **सांख्यकारिकायाम्**—"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति। **कर्त्री**ति। कर्तृत्वं चात्र कर्तृभूतान्तःकरणप्रकृतित्वम्। कार्यानुकूलकृति-मत्त्वलक्षणकर्तृत्वस्य तन्मतेऽन्तःकरणधर्मत्वादिति ध्येयम्। **पुष्कर**पलाशः पद्मपत्रम्। **निर्लेप** इति। लेपः संयोगविशेषः। अनुयोगितासम्बन्धेन सम्बन्धाभाववत्त्वं निर्लिप्त-त्वम्। यथा पद्मपत्रं सलिल-संश्लिष्टं न भवति, तथा पुरुषः कर्तृत्वादिसंश्लिष्टो न भवतीति भावः। किमत्र मानमिति चेत्? पुरुषः कर्तृत्वाभाववान् अकारणत्वादित्यनु-मानं मानम्। अकारणत्वमसिद्धमिति चेत्, तत्राह—**कार्य**कारणयोरिति। एतन्मत इत्यादिः। **अभेदात्** तादात्म्यात्। तथा च **योगभाष्यं**—स च संस्थानविशेषो भूत-सूक्ष्माणां साधारणो धर्म आत्मभूतः फलेन व्यक्तेनानुमित इति। **तन्नाशः**—पुरुषनाशः। उपलक्षणं चैतत्, पुरुषस्य जगत्कारणत्वे जगतोऽपि नाशो न स्यात्, नित्यपुरुषाभेदा-दिति। **न स्यात्**—मा भवतु। **तस्य**—पुरुषस्य। नन्वेवं पुरुपकल्पना नैव युक्ता निष्प्रयोजनत्वादित्यत आह—**बुद्धि**गतेति। **चैतन्याभिमान**श्चेतनोऽहं करोमीति

প্রত্যয় ব্যতীত উপপন্ন হয় না। অথচ অচ্-প্রত্যয়ান্ত আনন্দশব্দে আনন্দবান্ বুঝায়। 'অসুখং' পদে বহুব্রীহি স্বীকার করিলে সুখাভাববান্ (আনন্দাভাববান্) বুঝাইবে। সুতরাং অসুখশ্রুতি ও বিজ্ঞানশ্রুতির পরস্পর বিরোধ হইবে এবং "আনন্দং ব্রহ্মণো বিদ্বান্" এই শ্রুতিতে [আনন্দ ও ব্রহ্মের] ভেদ স্পষ্ট উক্ত হইয়াছে। ইহাই (ব্রহ্মবাদের) সংক্ষেপ [কথা]।

ইহার দ্বারা অর্থাৎ আত্মার জ্ঞানবত্ত্ব-সাধনের দ্বারা (সাংখ্যমতও খণ্ডিত হইল।) সেই সাংখ্যমত হইতেছে—প্রকৃতি কর্ত্রী, পুরুষ কিন্তু পদ্মপত্রের ন্যায় নির্লেপ-(কর্তৃ-ত্বাদির সম্বন্ধ রহিত) কিন্তু চেতন। [সাংখ্যমতে] কার্য্য ও [উপাদান] কারণের **অভেদবশতঃ** কার্য্য বিনষ্ট হইলে কার্য্যরূপে কারণের নাশ না হউক—এইজন্য পুরুষের অকারণত্ব অর্থাৎ পুরুষ কোন কার্য্যের (উপাদান) কারণ নহে [বলিয়া সিদ্ধান্ত হইয়াছে।] বুদ্ধির [চেতনোঽহং করোমি—এইরূপ] চৈতন্যাভিমান অন্য কোন

**णामः। सैव महत्तत्त्वमन्तःकरणमित्युच्यते। तत्सत्त्वासत्त्वाभ्यां पुरुषस्य संसारापवर्गौ। तस्या एवेन्द्रिय-प्रणालिकया परिणतिर्ज्ञानरूपा घटादिना सम्बन्धः।**

भ्रमः। **अन्यथा**नुपपत्त्या चेतनपुरुषं विनानुपपत्तेः। **तत्कल्पनम्** चेतनपुरुषकल्पना। अयम्भावः—जड़रूपायाः प्रकृतेः परिणामत्वेन बुद्धेर्जड़त्वेऽपि इच्छादिवत् चैतन्यमपि तत्र प्रतीयते, चेतनोऽहं करोमीति सामानाधिकरण्यात्। तच्च तस्या न स्वाभाविकं, जड़त्वात्, जड़त्वस्य चैतन्यविरोधित्वात्, अतः कुसुमोपरागकृतं स्फटिकलौहित्यमिव चेतनोपरागकृतं तत् स्वीकर्त्तव्यमिति चेतनपुरुषसिद्धिरिति। **परिणामः**—अवस्थितस्य धर्मिणः पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः। नन्वेवं पुरुषस्य कर्त्तृत्वाभावे निर्लिप्तत्वे च बन्धमोक्षौ न स्यातामत आह—**तत्सत्त्वे**ति। बुद्धिसत्त्वासत्त्वाभ्यामित्यर्थः। **अयम्भावः**—असङ्गस्यापरिणामिनः पुरुषस्य साक्षाद् विषयसम्बन्धासम्भवाद् वृत्तिद्वारकस्तत्सम्बन्धो वाच्यः। वृत्तिश्च इन्द्रियार्थसन्निकर्षजन्यो व्याप्त्यादिज्ञानजन्यो वा बुद्धिपरिणामविशेषः। वृत्तिविषययोः सम्बन्धस्त्वाकाराख्यः स्वरूपसम्बन्धविशेषः। तथा चोक्तं दृश्यत्वनिरुक्तौ **लघुचन्द्रिकायां** "वृत्तिव्याप्यत्वं वृत्तेराकाराख्यं विषयत्वमि"ति। तेन रूपरसादीनां गुणक्रियादीनां वाकाराभावेऽपि न क्षतिः। विषयाकारपरिणामवत्याञ्च बुद्धावात्मनः प्रतिविम्बोदयः प्रमा फलमिति चाख्यायते। तथा च वृत्त्या बुद्धिसम्बद्धोऽपि विषयो वृत्तिमद्-बुद्धिपुरुषयोर्भेदाग्रहात् पुरुषप्रतिबिम्बद्वारा पुरुषसम्बद्धः पुरुषस्य संसारसम्पादकः, बुद्धिनाशे तु वृत्त्यभावाद् विषयभानाभावेन कैवल्येनावस्थानरूपो मोक्षः। अतो बुद्धिसत्त्वासत्त्वाधीनौ पुरुषस्य संसारापवर्गौ, न साक्षादिति। ननु पुरुषे साक्षात्सम्बन्ध एव विषयस्याऽस्तु, किमुक्तवृत्तिघटित-परम्परासम्बन्धेनेत्यत आह—**तस्या** इति। बुद्धेरित्यर्थः। परिणतिरित्यग्रेतनेनान्वयः। तथा च सुखदुःखादिषु घटपटादिषु वा विषयेषु बुद्धेरेव सम्बन्धः, पुरुषसम्बन्धस्तु बुद्धिपुरुषयोरसंसर्गाग्रहात् पारम्पर्येण, न साक्षात्, असङ्गत्वात्

প্রকারে অর্থাৎ চেতন পুরুষ ব্যতীত উপপন্ন না হওয়ায় পুরুষ কল্পিত হইয়াছে। প্রকৃতির [ প্রথম ] পরিণাম বুদ্ধি। সেই বুদ্ধিই মহত্তত্ত্ব বা অন্তঃকরণ বলিয়া কথিত হয়। সেই বুদ্ধির সত্ত্বাসত্ত্ব দ্বারা অর্থাৎ পুরুষে বুদ্ধির সম্বন্ধ ও অসম্বন্ধ প্রযুক্ত পুরুষের সংসার ও অপবর্গ হইয়া থাকে। সেই বুদ্ধির ইন্দ্রিয়রূপ প্রণালিকা দ্বারা পরিণামই হইতেছে জ্ঞানরূপ (বৃত্তিরূপ)। [তাহা দ্বারা] ঘটাদি বিষয়ের সহিত [ আত্মার ]

**पुरुषे कर्तृत्वाभिमानो बुद्धौ चैतन्याभिमानश्च भेदाग्रहात्। ममेदं कर्त्तव्यमिति**

तस्येति भावः। **इन्द्रिय**प्रणालिकया—इन्द्रियाण्येव प्रणालिका—कुल्या इव बुद्धिसञ्चरण-मार्गास्तया। **परिणति**रिति। तथा च तैजसस्य बुद्धिरूपस्यान्तःकरणस्येन्द्रियाधिष्ठानद्वारा बहिर्निर्गतस्य घटादिविषयेण संयुक्तस्य योऽयं मुषानिषिक्तद्रुतताम्रादिवद् विषयाकार-सदृशाकारः सैव वृत्तिः। तयैव वृत्त्या बुद्धितादात्म्यापन्नस्य पुरुषस्य घटादिविषयेण ज्ञातृ-ज्ञेयत्वलक्षणः सम्बन्धः। स च वृत्तिमन्तरेण नैव घटते इति वृत्तिः कल्प्यते। वृत्त्या विषय-सम्बन्धे सति पुरुषस्याभिमानश्चेतनोऽहं पश्यामीतीति भावः। **ज्ञानरूपा**—वृत्तिरूपा। तयेति शेषः। ननु पुरुषस्य निर्लिप्तत्वे बुद्धेश्चाचेतनत्वे तयोः कर्त्तृत्वं न स्यात्, प्रमाणेन कर्त्तव्यमर्थमवगम्य चेतनोऽहं चिकीर्षन् करोमीति कृतिचैतन्ययोः सामानाधिकरण्यात्। तस्मात् तदतिरिक्तः कश्चित् कर्त्ता स्वीकर्त्तव्य इत्यत आह—**पुरुष** इति। **भेदाग्रहात्**—बुद्धिपुरुषयोर्भेदाग्रहात्। तथा च यद्यपि पुरुषः पुष्करपलाशवन्निर्लेपः, यद्यपि चाचेतना बुद्धिस्तथापि तयोरनाद्यविवेकाद् भोक्तृभोग्ययोग्यतालक्षणेऽनादिसम्बन्धे सति पुरुषः कर्त्तेव बुद्धिश्च चेतनेवोपलभ्यते। सम्बन्ध्यन्तर-सम्पर्कादनागता कर्त्तृता चेतनता चान्यत्रोप-लभ्यमाना गौणी मन्तव्या, न परमार्थतः। तथा चोक्तं—तस्मात् तत्संयोगादचेतनं चेतनावदिव लिङ्गम्। गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीनः॥ इतीति भावः।

इदानीं बुद्धित उपलब्धेर्भेद-दर्शनार्थं भेदाग्रहफलं बुद्धेरंशत्रयं दर्शयति—**ममेद्-**

সম্বন্ধ হয়। [ বুদ্ধি ও পুরুষের ] ভেদাগ্রহবশতঃ পুরুষে কর্তৃত্বাভিমান এবং বুদ্ধিতে চৈতন্যাভিমান হইয়া থাকে। অতাত্ত্বিক [ মুখের ] প্রতিবিম্ব যেমন মুখের দর্পণসম্বন্ধ,

**বিবৃতি**

সাংখ্যমতে বুদ্ধি ও উপলব্ধি ভিন্ন। ত্রিগুণাত্মক সত্ত্বপ্রধান বুদ্ধির ইন্দ্রিয়াদিদ্বারা বিষয়ের সহিত সম্বন্ধবশতঃ মুষানিক্ষিপ্ত গলিত ধাতুর ন্যায় যে বিষয়াকার পরিণাম হয়, তাহাকেই বৃত্তি বা বৃত্তিজ্ঞান বলে। সেই বিষয়াকার পরিণাম বা বৃত্তিতে পুরুষের যে প্রতিবিম্ব, তাহাই বিষয়ের উপলব্ধি। যখন কোন বুদ্ধিব্যাপার বা দেহেন্দ্রিয়াদি ব্যাপারের সহিত বিষয়ের উপলব্ধি হয়, তখন জ্ঞাতা, জ্ঞেয় ও ব্যাপার—এই তিনটী প্রকাশিত হয়। বুদ্ধিতাদাত্ম্যাপন্ন চেতন পুরুষই জ্ঞাতা। ইহার অহংরূপে বা মমরূপে অভিলাপ হয়। ঘটপটাদি দৃশ্য বস্তুসমূহই জ্ঞেয়। অভিলপ্যমান ধাতুর অর্থই ব্যাপার। এখানে ব্যাপার শব্দে বুদ্ধির বৃত্তি, কৃতি, ইচ্ছা প্রভৃতি ধর্ম

**मदंशः पुरुषोपरागो बुद्धेः स्वच्छतया तत्प्रतिबिम्बादतात्त्विको दर्पणस्येव मुखो-मि**त्यादिना। **मदंश** इति। पुरुषांश इत्यर्थः। तथा चानाद्यविवेकात् पुरुषतादात्म्यापन्नाया बुद्धेरिन्द्रियप्रणालिकया विषयसम्बन्धे सति योऽयमहमिदं करोमीति पुरुषविषयव्यापाराणामवभासस्तत्र मदंशावभासो बुद्धेर्वृत्तिद्वारक-पुरुषसम्बन्धनिबन्धनो भवति। असम्बद्धस्य बिम्ब-प्रतिबिम्बभावायोगाच्चित्प्रतिबिम्बरूपस्यावभासस्य चित्सम्बद्धायामेव वृत्तावभ्युपगमादिति भावः। **उपरागः**—सम्बन्धः। स च ममेति षष्ठ्या बोध्यते। ननु पुरुषस्य व्यापकत्वादस्त्येव बुद्धिसम्बन्धः, किमनेन वृत्तिद्वारकसम्बन्धेनेत्यत आह—**बुद्धेरि**ति। तथा च विभुत्वप्रयोजक-सम्बन्धस्य विषयावभासहेतुत्वे सर्वदा सर्वस्य सर्वावभासः स्यात्, तत्सम्बन्धस्य सर्वदा सर्वत्र सत्त्वात्। न च तथा। तस्मात् तद्विलक्षणः कश्चित् सम्बन्धः स्वीकर्त्तव्य इति भावः। प्रतिबिम्बोदयहेतुमाह—**स्वच्छतये**ति—सत्त्वोद्रेकादित्यर्थः। **तत्प्रति**बिम्बादिति। विषयाकारवृत्त्या सत्त्व-रजस्तमोगुणात्मिकाया बुद्धेस्तमोभिभवे सति सत्त्वसमुद्रेकाद् वृत्तिरूपेण परिणतायां बुद्धौ पुरुषप्रतिबिम्बादित्यर्थः। **अतात्त्विक** इति। कादाचित्क इत्यर्थः। तथा चासङ्गस्य पुरुषस्य बुद्धौ वास्तवसम्बन्धाभावेऽपि पुरुषप्रतिबिम्बाद् बुद्धेश्चेतनायमानाया योऽयं पुरुषोपरागः, स एवातात्त्विकः सम्बन्ध इति भावः। तत्र दृष्टान्तमाह—**दर्पणस्येवे**ति। यथा दर्पणस्य मुखसम्बन्धः प्रतिबिम्बमात्रं, न वास्तवस्तद्वद् बुद्धि-पुरुषयोरपीत्यर्थः। बुद्धेर्विषय-

তদ্রূপ "মমেদং কর্ত্তব্যং" অর্থাৎ এইটী আমার কর্ত্তব্য—এই মদংশটী অর্থাৎ "মম"—এই অংশটী হইতেছে বুদ্ধির স্বচ্ছতাহেতু পুরুষ প্রতিবিম্ব-নিবন্ধন অতাত্ত্বিক পুরুষোপরাগ

### বিবৃতি

এবং দেহেন্দ্রিয়াদির গমনাদি ক্রিয়া বুঝিতে হইবে। ইন্দ্রিয়াদি দ্বারা বিষয়ের সহিত বুদ্ধির সম্বন্ধ হইলে অহমাকার, ঘটাদি বিষয়াকার ও ব্যাপারাকার বৃত্তি হয় এবং উহাতে দ্রষ্টা পুরুষের প্রতিবিম্ব পড়ে। দর্পণে যেরূপ মুখের প্রতিবিম্ব পড়ে এবং ঐ প্রতিবিম্ব দ্বারা দর্পণের সহিত মুখের যেমন একটী অতাত্ত্বিক সম্বন্ধ হয়; তদ্রূপ অহমাকার স্বচ্ছ বৃত্তিতে পুরুষের প্রতিবিম্ব পড়ে এবং ঐ প্রতিবিম্ব দ্বারা বৃত্তিবিষয় অহমের সহিত পুরুষের অতাত্ত্বিক সম্বন্ধ হয়। ইহাই বুদ্ধির সহিত পুরুষের উপরাগ বা সম্বন্ধ। এইরূপ সম্বন্ধ হইলেই জ্ঞাতার অহংরূপে বা মমরূপে প্রকাশ ও অভিলাপ হইয়া থাকে। দর্পণে নিঃশ্বাস পড়িলে উহাতে যে মালিন্যের সৃষ্টি হয়, সেই মালিন্য

रिति चेन्, उद्भूतस्पर्श एव लाघवात् कारणमस्तु। प्रभाया अप्रत्यक्षत्वे त्विष्टापत्तिरित्येव किं न स्यात्? तस्मात् प्रभां पश्यामीतिवद् वायुं स्पृशामीति प्रत्ययस्य सम्भवाद् वायोरपि प्रत्यक्षत्वं सम्भवत्येव। बहिरिन्द्रियजन्य-

भावादिति भावः। प्राचीनः पुनः शङ्कते—**इष्टे**ति। शब्दादि-लिङ्गैर्वायोरनुमेयत्वाभ्युपगमादिति भावः। प्रतिवन्द्योत्तरयति—**उद्भूते**ति। **लाघवा**दिति। रूपापेक्षया स्पर्शस्य लाघवाभावेऽप्यात्मावृत्ति-शब्दभिन्न-विशेषगुणापेक्षया रूपवद् लाघवादिति भावः। ननूद्भूतस्पर्शस्य प्रत्यक्षप्रयोजकत्वे प्रभायाः प्रत्यक्षं न स्यात्, तस्या उद्भूतस्पर्शाभावादित्यत आह—**प्रभाया** इति। वायोः प्रत्यक्षे च बाधकाभावात्, प्रभाया उद्भूतस्पर्शरहिताया अप्रत्यक्षे त्विष्टापत्तिसम्भवात् स्पर्शस्यैव कारणत्वं कथं न स्यादिति भावः। **किं न स्यादि**ति। वायुं स्पृशामीत्यनुभवसत्त्वेऽपि यथा भवता वायोरप्रत्यक्षत्वमभ्युपगतम्, तथाऽस्माभिरपि प्रभाया अप्रत्यक्षत्वमङ्गीक्रियत इति भावः। गुरुभूतस्याप्यात्मावृत्तिशब्दभिन्न-विशेषगुणवत्त्वस्य कारणत्वं व्यवस्थापयति—**तस्मादि**ति। रूपमात्रस्य स्पर्शमात्रस्य वा कारणत्वे बाधकसत्त्वादित्यर्थः। **प्रभा**मिति। तथा च यथा प्रभां पश्यामीत्यनुभवानुरोधात् प्रभायाः प्रत्यक्षत्वमभ्युपगमनीयम्, तद्वद् वायुं स्पृशामीत्यनु-

—এই যদি বলি। [উঃ] তবে লাঘববশতঃ উদ্ভূত স্পর্শই [বহিরিন্দ্রিয়জন্য প্রত্যক্ষে] কারণ হউক। প্রভার অপ্রত্যক্ষে কিন্তু ইষ্টাপত্তি কেন হয় না? অর্থাৎ, প্রভাতে উদ্ভূত স্পর্শ না থাকায় প্রভার অপ্রত্যক্ষের আপত্তি ইষ্টাপত্তি বলিয়া কেন স্বীকৃত হয় না? সুতরাং বাধক থাকায় অর্থাৎ প্রভার প্রত্যক্ষ উভয় সম্মত বলিয়া 'প্রভাং পশ্যামি' এইরূপ (প্রভাবিষয়ক চাক্ষুষ) জ্ঞানের ন্যায় 'বায়ুং স্পৃশামি' এই জ্ঞান (বায়ুবিষয়ক স্পার্শন প্রত্যক্ষ) সম্ভব বলিয়া বায়ুরও প্রত্যক্ষ সম্ভব হয়ই;

**বিবৃতি**

কারণ যদি না থাকে, তবে কারণাভাব সিদ্ধ না হওয়ায় ঐ সকল স্থলে বহিরিন্দ্রিয়জন্য প্রত্যক্ষাভাবরূপ কার্য্যাভাব সিদ্ধ হইতে পারে না। রূপাভাব ও স্পর্শাভাব—এই উভয়কে উক্ত প্রত্যক্ষাভাবের প্রয়োজক বলিলে গৌরব হয়। অতএব বহিরিন্দ্রিয়জন্য দ্রব্যের প্রত্যক্ষে একটী লঘু কারণ অবশ্য স্বীকার্য্য। রূপ কারণ হইলে লঘু হয় বটে, কিন্তু তাহাতে বায়ুর প্রত্যক্ষ হয় না। অথচ এই মতে বায়ু প্রত্যক্ষ। এজন্য উহাঁরা রূপকে কারণ না বলিয়া আত্মাবৃত্তি শব্দভিন্ন বিশেষগুণবত্ত্বকেই কারণ বলেন। তাই বিশ্বনাথ বলিলেন—**আত্মাবৃত্তি-শব্দভিন্ন-বিশেষগুণবত্ত্বং বা।**

**द्रव्याध्यक्षे, त्वचो योगो मनसा ज्ञानकारणम् ।**

**द्रव्यप्रत्यक्षमात्रे न रूपस्य, न वा स्पर्शस्य हेतुत्वम् । वायुप्रभयोरेकत्वं गृह्यत एव, क्वचिद् द्वित्वादिकमपि, क्वचित् संख्यापरिमाणाद्यग्रहो दोषादित्याहुः ॥५६॥**

**त्वचो योग इति । त्वङ्मनःसंयोगो ज्ञानसामान्यकारणमित्यर्थः । किं तत्र प्रमाणं ? सुषुप्तिकाले त्वचं त्यक्त्वा पुरीतति वर्त्तमानेन मनसा ज्ञानाजननमिति । ननु**

भवानुरोधाद् वायोः प्रत्यक्षत्वमभ्युपगमनीयम् । एवञ्च रूपमात्रस्य स्पर्शमात्रस्य वा न प्रत्यक्षकारणत्वम् , किन्त्वात्मावृत्तिशब्दभिन्नविशेषगुणवत्त्वस्य । तथा सति वायु-प्रभयोः प्रत्यक्षत्वं सम्भवत्येवेति भावः । ननु वायोः स्पार्शनप्रत्यक्षाङ्गीकारे तद्गत-संख्यादीनामपि स्पार्शनप्रत्यक्षं स्यादिति चेत् , तत्राह—**वायु-प्रभयो**रिति । **गृह्यत** एवेति । इयमेका दीप-प्रभेति प्रभागतैकत्व-ज्ञानवदयमेको वायुरिति वायुगतैकत्वसंख्याग्रहोऽपि भवत्येव । तथा च वायुगत-संख्यादि-ग्रहे त्विष्टापत्त्या वायोः स्पार्शनाङ्गीकारे बाधकाभाव इति भावः । **क्वचित्**—सजातीयसंवलनाभावे । **द्वित्वा**दीत्यादिपदात् परिमाण-परिग्रहः । तद्ग्रहश्च भूयोऽवयवावच्छेदेन त्वगिन्द्रियसन्निकर्षस्थले बोध्यः । **दोषात्**—सजातीय-संवलनादिरूपदोषात् ॥५६॥

जन्यज्ञानमात्रस्य साधारणं कारणान्तरमाह—**त्वङ्मनः**संयोग इति । **ज्ञानसामान्ये**—जन्यज्ञानसामान्ये । **सुषुप्ति**काल इति । निद्रानाड्यवच्छिन्नात्ममनःसंयोगः **सुषुप्तिः** । तत्कारणं भोगजनकादृष्टवृत्तिनिरोधः । तदुक्तमाचार्यैः—"वृत्तिरोधः सुषुप्तिवदि"ति । इयमेव सुषुप्तिर्निद्रेत्युच्यते । निद्रानाड़ी च पुरीतत् । प्रदेशविशेषावस्थितमनःसंयोगः **स्वप्नः** । प्रदेशविशेषस्तु पुरीतद्-बहिर्देशयोः सन्धिरित्यनयोर्भेदः ।

[ সুতরাং ] বহিরিন্দ্রিয়োৎপন্ন প্রত্যক্ষমাত্রে রূপ বা স্পর্শ কারণ নহে। [ কিন্তু আত্মাতে অবৃত্তি শব্দ-ভিন্ন বিশেষ-গুণবত্ত্বই কারণ। ] বায়ু ও প্রভার একত্ব সংখ্যা গৃহীত হয়ই। কোন স্থলে ( সজাতীয় বায়ুদ্বয়ের পরস্পর অসংবলন (অমিশ্রণ) স্থলে ) দ্বিত্ব-প্রভৃতি সংখ্যাও গৃহীত হয়। [ বায়ুদ্বয়ের সংবলাদিরূপ ] দোষবশতঃ কোন স্থলে ( সংবলন স্থলে ) সংখ্যা, পরিমাণ প্রভৃতি গৃহীত হয় না ॥৫৬॥

**ত্বচো যোগঃ** ইত্যাদি গ্রন্থের অর্থ—ত্বগিন্দ্রিয়ের সহিত মনের সংযোগ জ্ঞান-সামান্যে ( যে কোন অনিত্য জ্ঞানে ) কারণ। তাহাতে কি প্রমাণ? সুষুপ্তিকালে ত্বগিন্দ্রিয় পরিত্যাগ করিয়া পুরীতৎ নাড়ীতে বর্ত্তমান মনের দ্বারা জ্ঞানের অনুৎপত্তিই

**सुषुप्तिकाले किं ज्ञानं भविष्यति—अनुभवरूपं स्मरणरूपं वा? नाद्यः, अनुभव-सामग्र्यभावात्। तथा हि—प्रत्यक्षे चक्षुरादिना सह मनःसंयोगस्य हेतुत्वात् तदभावादेव न चाक्षुषादि प्रत्यक्षम्। ज्ञानादेरभावादेव न मानसं प्रत्यक्षम्, ज्ञानाद्यभावे चात्मनोऽपि न प्रत्यक्षमिति। एवं व्याप्तिज्ञानाभावादेव नानुमितिः, सादृश्यज्ञानाभावान् नोपमितिः, पदज्ञानाभावाद् न शाब्दबोध इत्यनुभवसामग्र्य-भावाद् नानुभवः। उद्बोधकाभावाच्च न स्मरणम्। मैवम्। सुषुप्तिप्राक्कालोत्-**

**ज्ञाना**जननमित्यत्र तत्र प्रमाणमित्यनुषज्यते। तथा च यदि त्वङ्मनः-संयोगो जन्यज्ञान-सामान्यं प्रति कारणं न स्यात्, सुषुप्त्यवस्थायामपि किमपि ज्ञानं स्यात्, विषयादीनां तत्रापि सद्भावात्। न च तथा; तस्मात् तदा ज्ञानरूपकार्याभावप्रयोजकतया कस्यापि ज्ञानकारणस्याभावः स्वीकर्त्तव्यः। स चाभावस्त्वङ्मनसंयोगाभावः पर्यवस्यति, अन्येषां ज्ञानकारणानां तत्र सद्भावादिति ज्ञानानुत्पत्त्या त्वङ्मनः-संयोगो ज्ञानसामान्यकारणत्वेन कल्प्यत इति भावः। **तदभावात्**—चक्षुरादिना सह मनःसंयोगाभावात्। **न मानस**-मित्यस्य ज्ञानादेरित्यनेनान्वयः। **न प्रत्यक्ष**मिति। मनोयोग्य-विशेषगुणसम्बन्धेनैवात्मनो मानसत्वाङ्गीकाराद् मनोयोग्य-विशेषगुणस्य ज्ञानादेरभावादेव नात्मप्रत्यक्षमिति भावः। **अनुभव**-सामग्रीति। कार्यायोगव्यवच्छिन्नः कारणसमुदायः **सामग्री। उद्बोधका-**

[তাহাতে প্রমাণ।] অর্থাৎ সুষুপ্তিকালে মনঃ ত্বগিন্দ্রিয়রহিত পুরীতৎ নাড়ীতে অবস্থান করে, সে সময়ে জ্ঞানকারণ ত্বঙ্মনঃ-সংযোগ না থাকায় কোন জ্ঞানই উৎপন্ন হয় না। এই অনুৎপত্তিরূপ কার্য্যাভাবের দ্বারা বুঝা যায়—কার্য্যের কোন কারণের অভাব আছে। যে কারণের অভাবে জ্ঞানের অনুৎপত্তি, তাহা হইতেছে—ত্বঙ্মনঃ-সংযোগ। [পূঃ] আচ্ছা, সুষুপ্তিকালে অনুভবরূপ বা স্মরণরূপ—কি জ্ঞান হইবে? প্রথমটী নহে; কারণ অনুভবের সামগ্রী নাই। তাহা যেমন—চক্ষুরাদি ইন্দ্রিয়ের সহিত মনের সংযোগ হইতেছে প্রত্যক্ষের হেতু। তাহার অভাববশতঃই চাক্ষুষাদি প্রত্যক্ষ হইতে পারে না, জ্ঞানাদির অভাববশতঃই [জ্ঞানাদির] মানস প্রত্যক্ষ হয় না। জ্ঞানাদির অভাবে আত্মারও মানস প্রত্যক্ষ হইতে পারে না। এইরূপ ব্যাপ্তি-জ্ঞানের অভাববশতঃই অনুমিতি হয় না, সাদৃশ্যজ্ঞানের অভাববশতঃ উপমিতি হয় না, পদজ্ঞানের অভাববশতঃ শাব্দ-বোধ হয় না—এইরূপ অনুভবের সামগ্রী না থাকায় কোন অনুভব হয় না। [সংস্কারের] উদ্বোধক না থাকায় স্মরণ হয় না। [উঃ]

**पन्नेच्छादि-व्यक्तेस्तत्सम्बन्धेनात्मनश्च प्रत्यक्षत्वप्रसङ्गात्, तदतीन्द्रियत्वे माना-**

भावादिति। उद्बोधकस्य फलबल-कल्प्यत्वात् सुषुप्तौ स्मरणस्यानुभवसिद्धत्वे तदनुरोधेन कश्चिदुद्बोधकः कल्पनीयः। न च तत्र स्मरणमनुभवसिद्धमिति भावः। **इच्छादिव्यक्तेरिति।** सुषुप्तिप्राक्कालोत्पन्नयोग्यविशेषगुणव्यक्तेरित्यर्थः। ननु ज्ञानादिव्यक्तेरिति वक्तव्ये इच्छादिव्यक्तेरिति वचनं किमर्थमिति चेत्। उच्यते। ज्ञानादिव्यक्तेरित्युक्तौ सुषुप्तिप्राक्कालोत्पन्नस्य निर्विकल्पकस्यापि ग्रहणसम्भवात् सुषुप्तिकाले तत्प्रत्यक्षापादनायोगात्, ज्ञानपदस्य निर्विकल्पकान्यज्ञानपरत्वे गौरवात्। ननु सुषुप्तिप्राक्काले आत्मनि यद् यदुत्पद्यते, तत् सर्वमतीन्द्रियमेव। अतस्तस्यात्मनश्च प्रत्यक्षत्वं नैवापादनीयमित्यत आह—**तदतीन्द्रियत्व** इति। इच्छादिव्यक्तेरतीन्द्रियत्वे इत्यर्थः। ननु सुषुप्तिप्राक्काले केवलं निर्विकल्पकं जायते, नान्यत्। तच्चातीन्द्रियम्, तथा च ज्ञानस्यात्मनश्च न प्रत्यक्षमिति चेत्, तत्राह—

না—এইরূপ বলিও না; কারণ সুষুপ্তির পূর্ব্বক্ষণে উৎপন্ন ইচ্ছাদি (জ্ঞান) ব্যক্তির এবং সেই ইচ্ছাদি (জ্ঞান) ব্যক্তির সম্বন্ধের দ্বারা আত্মারও প্রত্যক্ষ প্রসঙ্গ হইতে পারে। সেই ইচ্ছাদি (জ্ঞান) ব্যক্তির অতীন্দ্রিয়ত্বে কোন প্রমাণ নাই। সুষুপ্তির পূর্ব্বক্ষণে নিয়মতঃ অর্থাৎ কেবল নির্ব্বিকল্পক জ্ঞানই উৎপন্ন হয়—ইহাতেও কোন প্রমাণ নাই।

**বিবৃতি**

ত্বঙ্ মনঃ সংযোগ জ্ঞানমাত্রের প্রতি কারণ। ইহা স্বীকার না করিলে সুষুপ্তির উচ্ছেদ হইবে। সুষুপ্তির পূর্বক্ষণে আত্মাতে জ্ঞান বা ইচ্ছাদি উৎপন্ন হইলে সুষুপ্তি ক্ষণে ঐ জ্ঞান বা ইচ্ছাদির প্রত্যক্ষ হইতে পারে। কারণ প্রত্যক্ষের হেতু আত্মমনঃ-সংযোগ প্রভৃতি রহিয়াছে। যদি সুষুপ্তিক্ষণে ঐ জ্ঞান বা ইচ্ছাদি ব্যক্তির প্রত্যক্ষ হয়, তবে সুযুপ্তি হইবে না। অথচ সুষুপ্তি প্রমাণ সিদ্ধ। সুতরাং সুষুপ্তিকালে জ্ঞানের অভাব অবশ্য স্বীকার্য্য। পরন্তু এই জ্ঞানের অভাব জ্ঞানকারণের অভাব ব্যতীত উপপন্ন হয় না। অতএব সুষুপ্তিকালে জ্ঞানকারণের অভাব আছে বলিতে হইবে। সুষুপ্তিকালে জ্ঞানকারণ আত্মমনঃ সংযোগ প্রভৃতি থাকিলেও ত্বঙ্ মনঃসংযোগ নাই। কারণ সুষুপ্তিকালে মনঃ ত্বগ রহিত পুরীতৎ নাড়ীতে প্রবেশ করে। ত্বঙ্-মনঃসংযোগকে জ্ঞানকারণ বলিয়া স্বীকার করিলে সুষুপ্তিকালে ঐ ত্বঙ্ মনঃসংযোগরূপ জ্ঞানকারণ না থাকায় জ্ঞানের অনুৎপত্তি উপপন্ন হইবে, নচেৎ নহে। তাই ত্বঙ্-মনঃসংযোগ জ্ঞান-কারণ বলিয়া কল্পিত হইয়াছে। এই অভিপ্রায় প্রকাশ করিতে বিশ্বনাথ বলিলেন—**সুষুপ্তিপ্রাক্‌কালোৎপন্নেচ্ছাদিব্যক্তেরিত্যাদি।**

भावात्, सुषुप्तिप्राक्काले निर्विकल्पकमेव नियमेन जायते इत्यत्रापि प्रमाणाभावात्। अथ ज्ञानमात्रे त्वङ्मनःसंयोगस्य यदि कारणत्वं, तदा रासन-चाक्षुषादिप्रत्यक्ष-काले त्वाचप्रत्यक्षं स्यात्, विषयत्वक्संयोगस्य त्वङ्मनःसंयोगस्य च सत्त्वात्, परस्परप्रतिबन्धादेकमपि वा न स्यादिति। अत्र केचित्—पूर्वोक्तयुक्त्या त्वङ्मनः-संयोगस्य ज्ञानहेतुत्वे सिद्धे चाक्षुषादिसामग्र्याः स्पार्शनादि-प्रतिबन्धकत्वमनुभवा-नुरोधात् कल्प्यत इति। अन्ये तु सुषुप्त्यनुरोधात् चर्ममनःसंयोगस्य ज्ञानहेतुत्वं

**सुषुप्ति**-प्राक्काल इति। त्वङ्मनः-संयोगस्य ज्ञानसामान्य-कारणत्वमसहमानः शङ्कते—**अथे**ति। **विषयत्वक्**संयोगस्येति। त्वगिन्द्रियस्य देहव्यापित्वेन विषयेण भुज्यमान-द्रव्येण रसनासंयोगकाले वाय्वादिना चक्षुःसंयोगकाले च त्वक्संयोगस्यापि सम्भवादिति भावः। **त्वङ्मनः**-संयोगस्येति। त्वङ्मनः-संयोगास्वीकारे रासनादिप्रत्यक्षमपि न स्यात्, ज्ञानसामान्यं प्रति तद्धेतुत्वस्य त्वयाऽभ्युपगमादिति भावः। **परस्पर**-प्रतिवन्धात्—चाक्षुष-स्पार्शन-सामग्र्योः परस्परप्रतिबन्धात्। **एक**मपि—रासनस्पार्श-नादिरूपं किमपि ज्ञानम्। **केचित्**—त्वङ्मनःसंयोगकारणवादी। **पूर्वोक्त**युक्त्या त्वचं त्यक्त्वा पूरीतति वर्त्तमानेन मनसा ज्ञानाजननादित्यादिकया युक्त्या। **अनुभवा**नुरोधा-दिति। द्वयोः सामग्र्योरुपस्थितौ चाक्षुषस्यैवानुभवसिद्धत्वात्, अन्यथा चाक्षुषादि-कालेऽपि स्पार्शनं भवत्येवेतीष्टापत्त्या सर्वत्र स्पार्शनसामग्र्याः सत्त्वेन चाक्षुषोच्छेदापत्त्या वा त्वदुक्तापत्तेरसङ्गतत्वापातादिति भावः। **अन्ये**—जयदेवमिश्राः। **सुषुप्त्य**नुरोधात्—सुषुप्तौ ज्ञानानुत्पादानुरोधेन। **चर्म**मनःसंयोगस्येति। विजातीयात्ममनः-संयोगस्य त्वङ्मनःसंयोगस्य वा हेतुत्वे विनिगमकाभावात् समवायेन त्वङ्मनःसंयोगस्य हेतुत्वे

[ পূঃ ] আচ্ছা, জ্ঞানমাত্রে ত্বঙ্মনঃ-সংযোগ যদি কারণ হয়, তবে রাসন ও চাক্ষুষাদি প্রত্যক্ষকালে ত্বাচ্ প্রত্যক্ষ হউক, যেহেতু [ ত্বাচ্ প্রত্যক্ষের কারণ ] বিষয়ের সহিত ত্বক্-সংযোগ ও ত্বঙ্মনঃ-সংযোগ রহিয়াছে। অথবা [ চাক্ষুষাদি প্রত্যক্ষের সহিত ত্বাচ্ প্রত্যক্ষের ] পরস্পর বিরোধবশতঃ একটীও জ্ঞান না হউক। এই পূর্ব্বপক্ষে কোন সম্প্রদায় এই বলেন—পূর্ব্বোক্ত যুক্তি দ্বারা অর্থাৎ সুষুপ্তিকালে জ্ঞানের অনুৎপত্তি দ্বারা ত্বঙ্মনঃ-সংযোগের জ্ঞানহেতুত্ব সিদ্ধ হওয়ায়, [ চাক্ষুষাদি ] অনুভবের অনুরোধে চাক্ষুষাদি-প্রত্যক্ষের সামগ্রীতে স্পার্শনাদি প্রত্যক্ষের প্রতিবন্ধকত্ব কল্পিত হইবে। অন্যেরা (পক্ষধর মিশ্রের সম্প্রদায়) কিন্তু বলেন—সুষুপ্তির অনুরোধে চর্ম্মমনঃ-

**मनोग्राह्यं सुखं दुःखमिच्छा द्वेषो मतिः कृतिः ।।५७।।**
**ज्ञानं यन्निर्विकल्पाख्यं तदतीन्द्रियमिष्यते ।**

कैल्प्यं, चाक्षुषादिप्रत्यक्षकाले त्वङ्मनःसंयोगाभावान्न त्वाचप्रत्यक्षमिति वदन्ति ।

**मनोग्राह्यमि**ति । मनोजन्यप्रत्यक्षविषय इत्यर्थः । **मतिर्ज्ञानम्** , **कृतिर्यत्नः** । एवं सुखत्व-दुःखत्वादिकमपि मनोग्राह्यम् । एवमात्मापि मनोग्राह्यः, किन्तु "मनोमात्रस्य गोचर" इत्यनेन पूर्वमुक्तत्वादत्र नोक्तः ।।५७।।

चक्षुःसंयोगाद्यनन्तरं घट इत्याकारकं घटत्वादिविशिष्टं ज्ञानं न सम्भवति,

लाघवात् चाक्षुषादिसामग्र्याः स्पार्शनप्रतिबन्धकत्वकल्पनागौरवाच्चेति भावः । **कल्प्यम्** —अनुमेयम् । इत्थञ्च पुरीतति मनःसंयोगरूप-सुषुप्तौ ज्ञानसामान्यकारणस्य चर्ममनःसंयोगस्याभावान्न ज्ञानोत्पादः । नापि चाक्षुषादिकाले पूर्वोक्तस्पार्शनापत्तिः, चाक्षुषादिकाले चर्ममनःसंयोगसत्त्वेऽपि तत्र स्थितेन त्वगिन्द्रियेण मनःसंयोगाभावादित्याह—**चाक्षुषादि**-प्रत्यक्षेति । **नव्यास्तु** सुषुप्त्यव्यवहितप्राक्कालेऽसमवायिकारणस्यात्ममनःसंयोगस्याभावाद् ज्ञानोत्पत्तेरसम्भवात् त्वङ्मनःसंयोगस्य चर्ममनःसंयोगस्य वा ज्ञानहेतुत्वं नास्तीत्याहुस्तच्चिन्त्यम् । मनोग्राह्यत्वस्य सार्वत्रिकत्वात् सर्वेषां मनोग्राह्यत्वापत्तिरतस्तदर्थमाह—**मनो**जन्येति । मनोमात्रजन्येत्यर्थः । मूलोक्तन्यूनतां परिहरति—**एव**मिति । **दुःखत्वा**दीत्यादिना तद्गत-सत्ता-गुणत्वादि-परिग्रहः । सत्ता-गुणत्व-समवायाभावास्तु सर्वेन्द्रियवेद्याः । तथा चोक्तं **न्यायवार्त्तिके**—"सत्ता-गुणत्वे च सर्वेन्द्रियग्राह्ये, समवायोऽभावश्च तथेति" (१।१।१४) ।।५७।।

मनोग्राह्यं ज्ञानमुक्त्वा तदग्राह्यं ज्ञानमाह मूले—**ज्ञानं** यदिति । **निर्वि**कल्पाख्यमिति । द्विविधं हि ज्ञानं सविकल्पकं निर्विकल्पकञ्च । तत्र वैशिष्ट्यविषयकं ज्ञानं सविकल्पकम् । वैशिष्ट्यञ्च विशेष्य-विशेषण-सम्बन्धः । निर्विकल्पकं तु वैशिष्ट्याविषयकं निष्प्रकारकं

সংযোগের জ্ঞান-হেতুত্ব কল্পনা করা উচিত। চাক্ষুষাদি প্রত্যক্ষকালে ত্বঙ্মনঃসংযোগের অভাববশতঃ ত্বাচ্ প্রত্যক্ষ হয় না। **মনোগ্রাহ্য** কথার অর্থ—মানস প্রত্যক্ষের বিষয়। **মতি** হইতেছে জ্ঞান। **কৃতি** হইতেছে যত্ন। এইরূপ-সুখত্ব, দুঃখত্ব প্রভৃতিও মনোগ্রাহ্য। এইরূপ আত্মাও মনোগ্রাহ্য। কিন্তু "মনোমাত্রস্য গোচরঃ" এই গ্রন্থের দ্বারা [ ইহা ] পূর্ব্বে উক্ত হওয়ায় এখানে উক্ত হয় নাই ॥৫৭॥

চক্ষুঃসংযোগ প্রভৃতির অনন্তর 'ঘট' এই আকারে ঘটত্বাদিবিশিষ্ট [ ঘটের ] জ্ঞান

**पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावाद्, विशिष्टबुद्धौ विशेषण-ज्ञानस्य कारणत्वात्।**

वा ज्ञानम्। उक्तञ्च **तार्किक**रक्षायाम्—"नामादिभिर्विशिष्टार्थविषयं सविकल्पकम्। अविशिष्टार्थविषयं प्रत्यक्षं निर्विकल्पकम्॥" इति। तत्रेन्द्रियसन्निकर्षानन्तरमेव द्रव्यादि-स्वरूपमात्रावगाहि जात्यादियोजनारहितं वैशिष्ट्यानवगाहि किञ्चिदिदमिति यत् संमुग्धज्ञानं जायते, तन्निर्विकल्पकमित्युच्यते। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं न वा व्यवहारविषय इति किं तत्र प्रमाणमिति चेत्। विशिष्टज्ञानस्यैव तत्र प्रमाणत्वात्। न हि विशेषण-ज्ञानमन्तरेण विशिष्टज्ञानमुत्पद्यते। विशिष्टज्ञाने हि विशेषणज्ञान-विशेष्येन्द्रिय-सन्निकर्ष-तदुभयासंसर्गाग्रहस्य कारणत्वावधारणात्। तथा च—एतज्जन्मनि प्राथमिकं घट इति प्रत्यक्षं जन्य-विशेषण-ज्ञानजन्यं जन्यविशिष्टज्ञानत्वादनुमितिवत्। तच्च विशेषण-ज्ञानं निर्विकल्पकमेव वाच्यं, तस्य सविकल्पकत्वेऽनवस्थापातात्। विशिष्टज्ञान-कारणत्वेन कल्पनीयस्य विशेषणज्ञानस्य विशिष्टबुद्धित्वे विशेषणज्ञानान्तर-सापेक्षता स्यादेवं तस्य तस्यापीत्यनवस्थाभिया प्रथमं विशेषणज्ञानं वैशिष्ट्यानवगाह्येव स्वीकार्यम्। न चैतद् विशेषणज्ञानं स्मृतिरूपं, एतज्जन्मनि तेन घटत्वस्य प्रागननुभवात्। नाप्याद्य-स्तन्यपानादि-वद् जन्मान्तरानुभूत-स्मरणं, तद्वदनन्यगतिकत्वाभावात्; निर्विकल्पकेनाप्युपपत्त्या जन्मान्तरीयसंस्कारोद्बोधकादृष्टकल्पनानुपपत्तेः, अन्यथा सविकल्पक-प्रत्यक्षादेरप्यपलाप-प्रसङ्गादित्यभिप्रेत्याह—**चक्षुःसंयोगा**द्यनन्तरमिति। महत्त्वाद्यवच्छिन्नचक्षुःसंयोगाद्य-नन्तरमित्यर्थः। आदिपदेन त्वक्संयोगपरिग्रहः। ननु घटत्वज्ञानाभावेऽपि घटज्ञानं कुतो न स्यादित्यत आह—**विशिष्ट**बुद्धाविति **तथा च**—विशिष्टबुद्धौ विशेषणज्ञानस्य

সম্ভব নহে। কারণ [ ঘট-এইরূপ ] বিশিষ্ট জ্ঞানের প্রতি বিশেষণ ঘটত্বের জ্ঞান কারণ বলিয়া [ বিশিষ্ট জ্ঞানের ] পূর্ব্বে বিশেষণ ঘটত্ব প্রভৃতির জ্ঞান নাই। সুতরাং

### বিবৃতি

নৈয়ায়িকমতে প্রত্যক্ষজ্ঞান দ্বিবিধ—সবিকল্পক ও নির্বিকল্পক। যে জ্ঞানে বৈশিষ্ট্য অর্থাৎ বিশেষ্য ও বিশেষণের সম্বন্ধ বিষয় হয়, তাহাকে সবিকল্পক জ্ঞান বলে। যে জ্ঞানে বৈশিষ্ট্য বিষয় হয় না, তাহাই নির্বিকল্পক জ্ঞান। কোন কোন সম্প্রদায় এই নির্বিকল্পক জ্ঞান স্বীকার না করিলেও নৈয়ায়িকগণ ইহা স্বীকার করেন। ইহাতে তাঁহাদের বক্তব্য এই যে—বিশেষণ যুক্ত বিশেষ্যকে বিশিষ্ট বলে। বিশিষ্ট পদার্থের জ্ঞানে বিশেষণের জ্ঞান কারণ। প্রথমে বিশেষণের জ্ঞান না হইলে বিশিষ্টের জ্ঞান

**तथा च प्रथमतो घट-घटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते, तदेव निर्विकल्पकम्। तच्च न प्रत्यक्षम्। तथा हि—वैशिष्ट्यानवगाहि ज्ञानस्य प्रत्यक्षं न भवति,**

कारणत्वे च। **वैशिष्ट्या**नवगाहि—वैशिष्ट्यनिष्ठ-सांसर्गिकविषयताशून्यम्, वैशिष्ट्या-विषयकमिति यावत्। ननु त्रिविधा चेह ज्ञान-विषयता प्रकारता-विशेष्यता-संसर्गता-भेदात्। तत्र ज्ञानमात्रस्य सविषयकत्वेन निर्विकल्पकेऽपि काचित् विषयताऽपेक्षितेति चेत्। तुरीय-विषयताया एव तत्राभ्युपगमात्। **तदेव**—वैशिष्ट्यानवगाह्येव ज्ञानम्। **प्राभाकराः** शाब्दिकाश्च निर्विकल्पकं नास्तीत्याहुः। निर्विकल्पकस्यातीन्द्रियत्वं साधयति—**तथा ही**त्यादिना। ज्ञानस्य प्रत्यक्षं वैशिष्ट्यानवगाहि न भवतीत्यन्वयः।

প্রথমে ঘট ও ঘটত্বের বৈশিষ্ট্যানবগাহী অর্থাৎ বৈশিষ্ট্যকে (সম্বন্ধকে) বিষয় না করিয়াই [যে] জ্ঞান উৎপন্ন হয়; তাহাই নির্বিকল্পক [জ্ঞান]। তাহা প্রত্যক্ষ নহে। তাহা এইরূপ —জ্ঞানের প্রত্যক্ষ বৈশিষ্ট্যানবগাহী হয় না। কারণ 'ঘটমহং জানামি' অর্থাৎ আমি

**বিবৃতি**

হইতে পারে না। যে ব্যক্তির রক্তের জ্ঞান প্রথমে হয় নাই, তাহার প্রথমেই রক্ত-বস্ত্রের জ্ঞান হয় না। ঘটত্বের জ্ঞান প্রথমে হইলেই পরে ঘটত্ববিশিষ্ট ঘটের জ্ঞান হইতে পারে, নচেৎ নহে। সুতরাং প্রথমে বিশিষ্টের বিশেষণের জ্ঞান আবশ্যক। কিন্তু বিশিষ্টের সেই বিশেষণটী যদি বিশিষ্ট অর্থাৎ অপর কোন বিশেষণ যুক্ত হয়, তবে বিশে-ষণের সেই বিশেষণটীকে প্রথমে জানিতে হইবে। আবার সেই বিশেষণটী যদি পূর্বের ন্যায় বিশিষ্ট হয়, তবে তাহারও বিশেষণকে প্রথমে জানিতে হইবে। এইরূপ প্রতিটী বিশেষণ বিশিষ্ট হইলে বিশিষ্ট পদার্থের জ্ঞানের পূর্বে তাহার বিশেষণকে প্রথমে জানিতে হইবে। তাহা হইলে অনবস্থা হইবে। সুতরাং প্রথম বিশেষণ জ্ঞানটীকে বৈশিষ্ট্যাবিষয়ক বলিতে হইবে। এই বৈশিষ্ট্যাবিষয়ক জ্ঞানই নির্বিকল্পক জ্ঞান। ঘটাদি বিষয়ের সহিত চক্ষুঃসংযোগের অনন্তর ঘটত্ববিশিষ্ট ঘটের 'এইটী ঘট' এইরূপে জ্ঞান হয় না। কারণ ঘটের বিশেষণ ঘটত্বের জ্ঞান প্রথমে হয় নাই। ঘট একটী বিশিষ্ট পদার্থ। বিশিষ্ট পদার্থের জ্ঞানে প্রথমে বিশেষণের জ্ঞান আবশ্যক। অতএব চক্ষুসংযোগের অনন্তর প্রথমে ঘট ও ঘটত্বের বিশিষ্ট্যাবিষয়ক জ্ঞান উৎপন্ন হইবে। ইহাই ঘট ও ঘটত্বের নির্বিকল্পক জ্ঞান। ইহা প্রকাশ করিতে বলিলেন—**তদেব নির্বিকল্পকম্।**

নৈয়ায়িকমতে এই নির্বিকল্পক জ্ঞানের প্রত্যক্ষ হয় না। উহা অতীন্দ্রিয়। তাৎপর্য্য এই যে, বিষয়ের জ্ঞান বা ব্যবসায়ের অনন্তর অনুব্যবসায় বা জ্ঞানের প্রত্যক্ষ হইয়া

**घटमहं जानामीति प्रत्ययात्। तत्रात्मनि ज्ञानं प्रकारीभूय भासते, ज्ञाने घटस्तत्र घटत्वम्। यः प्रकारः, स एव विशेषणमित्युच्यते। विशेषणे यद् विशेषणं, तद् विशेषणतावच्छेदकमित्युच्यते। विशेषणतावच्छेदक-प्रकारकं ज्ञानं विशिष्टवैशिष्ट्य-**

अत्रोपपत्तिमाह—**घटमह**मित्यादिना। **प्रत्ययात्**—घटत्वप्रकारक-घटविषयक-ज्ञानवानहमित्यनुभवात्। **तत्र**—तादृशानुभवे। **अयम्भावः**—अयं घट इति ज्ञानं व्यवसाय इत्युच्यते। घटमहं जानामीति ज्ञानप्रत्यक्षं त्वनुव्यवसाय इति। तत्रानुव्यवसाये यथात्मा विशेष्यतया भासते, तद्वद् ज्ञानमात्मनि विशेषणतया, ज्ञानविषयश्च घटो ज्ञानविशेषणतया, घटत्वञ्च घटविशेषणतया भासते, अनुव्यवसायस्य व्यवसायविषय-विषयकत्व-नियमात्। तथा च घटज्ञान-प्रत्यक्षस्य घटत्व-विशिष्टघटविषयकत्वेनैवानुभवसिद्धत्वाद् निर्विकल्पक-प्रत्यक्षस्यापि तथैव विशिष्ट-वैशिष्ट्यविषयकत्वमभ्युपगमनीयम्। तच्च न सम्भवति, निर्विकल्पकस्य वैशिष्ट्यानवगाहिज्ञानत्वात्, विशिष्टवैशिष्ट्यावगाहिज्ञानकारणस्य विशेषणतावच्छेदकप्रकारकज्ञानस्य पूर्वमभावादिति। **विशेषण**तावच्छेदकेति। अयं घट इत्याद्याकारकं विशेषणतावच्छेदकघटत्वादिप्रकारकं घटादिविशेष्यकं

ঘটবিষয়ক জ্ঞানবান্—এই জ্ঞান হইয়া থাকে। সেই জ্ঞানে আত্মাতে জ্ঞান, জ্ঞানে ঘট ও ঘটে ঘটত্ব প্রকার ( বিশেষণ ) হইয়া ভাসমান হইয়া থাকে। যাহা প্রকার, তাহাই বিশেষণ বলিয়া কথিত হয়। বিশেষণে যাহা বিশেষণ, তাহা বিশেষণতাবচ্ছেদক বলিয়া কথিত হয়। বিশেষণতাবচ্ছেদকপ্রকারক জ্ঞান বিশিষ্টের বৈশিষ্ট্যাবগাহী অর্থাৎ

**বিবৃতি**

থাকে। ব্যবসায় জ্ঞানে যে যে পদার্থ জ্ঞানের বিষয় হইয়া ভাসমান হয়, অনুব্যবসায়েও সেই সেই পদার্থ জ্ঞানের বিষয় হইয়া ভাসমান হইয়া থাকে। "অয়ং ঘটঃ" অর্থাৎ "এইটী ঘট" এইরূপ ব্যবসায় জ্ঞান হইলে উহাতে ঘটটী বিশেষ্যরূপে, ঘটত্বটী ঘটের বিশেষণরূপে এবং ঘটে ঘটত্বের সমবায়টী সম্বন্ধরূপে ভাসমান হইয়া থাকে। ঘটমহং জানামি বা ঘটজ্ঞানবানহং অর্থাৎ আমি ঘটজ্ঞানবান্—এইরূপে যখন ঘটজ্ঞানের অনুব্যবসায় বা প্রত্যক্ষ হয়, তখন আত্মা বিশেষ্যরূপে, আত্মাতে জ্ঞানটী, জ্ঞানে ঘটটী, ঘটে ঘটত্বটী বিশেষণরূপে, আত্মাতে জ্ঞানের, জ্ঞানে ঘটের এবং ঘটে ঘটত্বের সম্বন্ধটী সম্বন্ধরূপে ভাসমান হইয়া থাকে। সুতরাং জ্ঞানের প্রত্যক্ষ বা অনুব্যবসায় বিশিষ্টের বৈশিষ্ট্যকে ( সম্বন্ধকে ) বিষয় করিয়াই উৎপন্ন হয়, কখনও বিশিষ্টের বৈশিষ্ট্যকে বিষয় না করিয়া উৎপন্ন হয় না। যদি ঘটনির্বিকল্পকের প্রত্যক্ষ

**ज्ञाने कारणम्। निर्विकल्पके च घटत्वादिकं न प्रकारस्तेन घटत्वादिविशिष्ट-घटादि-वैशिष्ट्य-भानं ज्ञाने न सम्भवति। घटत्वाद्यप्रकारकं च घटादिविशिष्ट-ज्ञानं न**

ज्ञानमित्यर्थः। **विशिष्टवै**शिष्ट्यज्ञाने—अनुव्यवसाये। **कारण**मिति। वाच्यमिति शेषः। अन्यथा रक्तत्व-दण्डत्व-दण्डविषयक-निर्विकल्पकोत्तरं रक्तदण्डवानिति विशिष्ट-वैशिष्ट्यावगाहि-बुद्ध्यापत्तेरिति भावः। **तेन**—निर्विकल्पस्य घटत्वाद्यप्रकारकत्वेन, विशेषणतावच्छेदकप्रकारक-ज्ञानाभावेनेति यावत्। **न प्रकार** इति। निर्विकल्पकज्ञाने घटत्वादिकं घटाद्यंशे प्रकारतया न भासते इत्यर्थः, निर्विकल्पकस्य निष्प्रकारकज्ञान-त्वादिति भावः। **भानं**—विषयता। **ज्ञाने**—विशिष्टवैशिष्ट्यावगाहिज्ञाने निर्विकल्पक-ज्ञानप्रत्यक्षे। **न सम्भव**तीति। पूर्वं घटत्ववैशिष्ट्यस्य घटे निर्विकल्पकेनाऽविषयी-करणेन कारणीभूतस्य विशेषणतावच्छेदकप्रकारक-ज्ञानस्याभावादिति भावः। न च विशेष्ये विशेषणमिति रीत्यैव निर्विकल्पकप्रत्यक्षमस्तु किं विशेषणतावच्छेदक-प्रकारक-ज्ञानेनेति वाच्यम्, रक्तः पटो घटो द्रव्यमिति समूहालम्बनोत्तरं रक्तं घटं जानामीत्यनु-व्यवसायापत्तेः, रक्तत्वघटत्वयोः पूर्वमुपस्थितत्वात्, विशेष्ये विशेषणमिति रीत्यैवान्वय-सम्भवात्। विशिष्टवैशिष्ट्यावगाहित्वे तु पूर्वं रक्तो घट इति ज्ञानविरहान्न तथाविधानु-व्यवसायापत्तिरिति बोध्यम्। ननु घटत्वविशिष्ट-घटविषकज्ञानवानहमित्यनुव्यवसायो मास्तु, घटज्ञानवानहमित्याकारको निर्विकल्पकानुव्यवसायः स्यादिति चेत्, तत्राह—**घटत्वा**द्यप्रकारकमिति। **घटादि**विशिष्टज्ञानम्—घटादिविशिष्टज्ञानवैशिष्ट्यावगाहि-

বিশিষ্টের বৈশিষ্ট্যবিষয়ক জ্ঞানে কারণ। নির্বিকল্পক জ্ঞানে তো (বিশেষণতাবচ্ছেদক) ঘটত্ব প্রভৃতি প্রকার নহে। সেই হেতু নির্বিকল্পক জ্ঞানে ঘটত্বাদি-বিশিষ্ট ঘটাদির বৈশিষ্ট্যের ভান (বিষয়তা) সম্ভব নহে। ঘটত্বাদি-অপ্রকারক অর্থাৎ ঘটত্ব প্রভৃতিকে

**বিবৃতি**

বা অনুব্যবসায় হইত, তবে সবিকল্পক অনুব্যবসায়ের ন্যায় ঐ অনুব্যবসায়ের পূর্বে বিশেষণতাবচ্ছেদক প্রকারক জ্ঞান অর্থাৎ বিশেষণের বিশেষণকে (ঘটত্বকে) প্রকার (বিশেষণ) করিয়া ও ঘটকে বিশেষ্য করিয়া জ্ঞান হইত। কারণ বিশিষ্টের (ঘটত্ব-বিশিষ্ট ঘটের) বৈশিষ্ট্যবিষয়ক জ্ঞানে বিশেষণতাবচ্ছেদকপ্রকারক জ্ঞান হেতু। উহার উৎপত্তি পূর্বে আবশ্যক। কিন্তু নির্বিকল্পকের অনুব্যবসায়ের পূর্বে যে নির্বিকল্পক জ্ঞান উৎপন্ন হইয়াছে, উহাতে বিশেষণতাবচ্ছেদক অর্থাৎ বিশেষণের বিশেষণ ঘটত্বের

**महत्त्वं षड्विधे हेतुरिन्द्रियं करणं मतम् ॥५८॥**

**सम्भवति, जात्यखण्डोपाध्यतिरिक्त-पदार्थ-ज्ञानस्य किञ्चिद्धर्म-प्रकारकत्व-नियमात्। महत्त्वमिति। द्रव्यप्रत्यक्षे महत्त्वं समवायसम्बन्धेन कारणम्, द्रव्यसमवेतानां गुण-कर्म-सामान्यानां प्रत्यक्षे स्वाश्रय-समवाय-सम्बन्धेन, द्रव्यसमवेत-समवेतानां गुणत्वकर्मत्वादीनां प्रत्यक्षे स्वाश्रयसमवेतसमवायसम्बन्धेन कारणमिति।**

प्रत्यक्षम्। तत्र हेतुमाह—**जात्य**खण्डोपाधीति। जातेः समवायेनैव स्वरूपतो ज्ञानं, न तु सम्बन्धान्तरेणेति बोध्यम्। **द्रव्यप्रत्यक्षे**—विषयतासम्बन्धेन द्रव्यप्रत्यक्षे। **स्वाश्रये**-ति। स्वं महत्त्वं, तदाश्रयो द्रव्यं, तत्र गुणकर्मादयः समवेताः, अतः स्वाश्रयसमवाय-सम्बन्धेन महत्त्वस्य गुणादिषु सत्त्वात् प्रत्यक्षस्यापि विषयतासम्बन्धेन तत्रोत्पद्यमानत्वात्

বিশেষণ না করিয়া ঘটাদি বিশিষ্ট জ্ঞানও সম্ভব নহে। কারণ জাতি ও অখণ্ডোপাধি ব্যতিরিক্ত যে কোন পদার্থের জ্ঞানের কিঞ্চিদ্ধর্ম্ম-প্রকারকত্ব নিয়ম অর্থাৎ কোন একটী ধর্ম্ম অবশ্যই প্রকার হইবে—ইহাই নিয়ম। **মহত্ত্ব** গ্রন্থের অর্থ—দ্রব্যের প্রত্যক্ষে মহত্ত্ব সমবায় সম্বন্ধে কারণ। দ্রব্য সমবেত গুণ, কর্ম্ম ও সামান্যের প্রত্যক্ষে স্বাশ্রয়সমবায় সম্বন্ধে, দ্রব্য-সমবেত গুণ, কর্ম্ম প্রভৃতিতে সমবেত গুণত্ব, কর্ম্মত্ব প্রভৃতির প্রত্যক্ষে

**বিবৃতি**

প্রকাররূপে জ্ঞান হয় নাই। কারণ নির্বিকল্পকে কাহারও প্রকাররূপে জ্ঞান হয় না। পূর্বে যখন বিশেষণতাবচ্ছেদক প্রকারক জ্ঞান হয় নাই অর্থাৎ বিশেষণের বিশেষণ ঘটত্বকে প্রকার করিয়া ঘটকে বিশেষ্য করিয়া 'ঘটত্ববিশিষ্ট ঘট' এইরূপ জ্ঞান যখন হয় নাই, তখন নির্বিকল্পকের অনুব্যবসায়ে জ্ঞানাংশে ঘটত্ববিশিষ্ট ঘটের বৈশিষ্ট্যজ্ঞান হইতে পারে না।

আর ঘটত্বকে প্রকার বা বিশেষণরূপে জ্ঞান না করিয়া আত্মাতে ঘটাদি-বিশিষ্ট জ্ঞানের বৈশিষ্ট্য বোধ হইতে পারে না। কারণ জাতি বা অখণ্ডোপাধি ব্যতিরিক্ত কোন পদার্থের জ্ঞান হইলে উহাতে কোন কিছু ধর্ম অবশ্যই প্রকার হইবে। ঘট যখন জাতি বা অখণ্ডোপাধি নহে, তখন আত্মাতে জ্ঞানের বিশেষণ-রূপে উহার জ্ঞান হইলে ঘটত্ব অবশ্যই প্রকাররূপে ভাসমান হইবে। সুতরাং ঘটত্বকে প্রকার না করিয়া আত্মাতে ঘটাদিবিশিষ্ট জ্ঞানের বৈশিষ্ট্যের বোধ হইবে না। অতএব নির্বিকল্পক জ্ঞান প্রত্যক্ষের অযোগ্য। ইহা প্রকাশ করিতে বলিলেন—**জাত্যখণ্ডোপাধ্যতিরিক্ত-পদার্থজ্ঞানস্য-কিঞ্চিদ্ধর্ম-প্রকারকত্ব-নিয়মাৎ।**

**इन्द्रिय**मिति। अत्रापि षड्विध इत्यनुषज्यते। इन्द्रियत्वं तु न जातिः, पृथिवीत्वादिना साङ्कर्यात्। किन्तु शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानकारणमनःसंयोगाश्रयत्वम् इन्द्रियत्वम्। आत्मादिवारणाय—सत्यन्तम्। उद्भूत-विशेषगुणस्य श्रोत्रे सत्त्वात्—शब्देतरेति। विशेषगुणस्य रूपादेश्चक्षुरादावपि सत्त्वात्—

तयोः कार्यकारणभाव इति भावः। एवमग्रेऽपि। **साङ्कर्या**दिति। पृथिवीत्वाभाववति चक्षुरादाविन्द्रियत्वमिन्द्रियत्वाभाववति घटादौ च पृथिवीत्वम्, पार्थिवे च घ्राणे पृथिवीत्वमिन्द्रियत्वं चेति द्वयोः समावेशात् साङ्कर्यमिति भावः। चिन्तामण्युक्तमिन्द्रियलक्षणं निर्वक्ति—**शब्दे**तरेति। शब्दभिन्ना रूपादयः सुखादयश्च ये उद्भूतविशेषगुणास्तेषामनधिकरणत्वे सतीत्यर्थः। **आत्मादि**वारणाय—आत्मादावतिव्याप्तिवारणाय। ज्ञानकारणीभूतस्यात्ममनःसंयोगस्यात्मन्यपि सत्त्वादतिव्याप्तिः, सत्यन्तदाने च शब्दभिन्नोद्भूतविशेषगुणस्य सुखादेराश्रयत्वस्यात्मनि सत्त्वान्नातिव्याप्तिरिति भावः। चर्ममनःसंयोगस्य ज्ञानकारणतापक्षे चर्मण्यतिव्याप्तिस्तत्रापि ज्ञानकारणीभूतस्य चर्ममनःसंयोगस्य सत्त्वादतोऽत्रादिपदेन चर्मपरिग्रहः। अत एव लघुभूतस्याप्यात्मभिन्नत्वस्य परित्यागोऽन्यथा चर्मण्यतिव्याप्तेः। **श्रोत्रे** सत्त्वादिति। तथा च तत्राव्याप्तिरिति भावः। विशेषपदस्य

স্বাশ্রয়-সমবেত সমবায় সম্বন্ধে [মহত্ত্ব] কারণ। **ইন্দ্রিয়ং** এই স্থলেও ষড়্‌বিধ কথাটী অনুবৃত্ত হইবে অর্থাৎ ষড়্‌বিধ প্রত্যক্ষে ইন্দ্রিয় করণ। ইন্দ্রিয়ত্বটী জাতি নহে। কারণ, পৃথিবীত্ব, জলত্ব প্রভৃতির সহিত সাঙ্কর্য্য হয়। কিন্তু ইন্দ্রিয়ত্ব হইতেছে—শব্দভিন্ন উদ্‌ভূত বিশেষ গুণের অনাশ্রয়ত্ব-সমানাধিকরণ জ্ঞানকারণ-মনঃসংযোগাশ্রয়ত্ব অর্থাৎ শব্দভিন্ন উদ্‌ভূত বিশেষ গুণের অনাশ্রয় এবং জ্ঞানকারণ মনঃ-সংযোগের আশ্রয়ই ইন্দ্রিয়। [জ্ঞানকারণ মনঃ-সংযোগাশ্রয়ত্ব মাত্র ইন্দ্রিয়ের লক্ষণ হইলে আত্মাতে অতিপ্রসক্তি হইত; কারণ আত্মা জ্ঞানকারণ মনঃসংযোগের আশ্রয়। অতএব] আত্মাদিতে [অতিপ্রসক্তি] বারণের জন্য 'সত্যন্ত' -অর্থাৎ 'শব্দভিন্ন উদ্‌ভূত বিশেষ গুণের অনাশ্রয়ত্ব সমানাধিকরণ উক্ত হইয়াছে। [আত্মা জ্ঞানকারণ মনঃ-সংযোগের আশ্রয় হইলেও শব্দভিন্ন জ্ঞানাদি উদ্‌ভূত বিশেষগুণের অনাশ্রয় নহে বলিয়া উহাতে শব্দভিন্ন বিশেষগুণের অনাশ্রয়ত্ব থাকে না বলিয়া অতিপ্রসক্তি হয় না।] উদ্‌ভূত বিশেষগুণ শব্দ শ্রোত্রে থাকায় [শ্রোত্রে ইন্দ্রিয় লক্ষণের অব্যাপ্তি হয়, এই অব্যাপ্তি বারণের জন্য] "শব্দেতর" এই [বিশেষণটী] উক্ত হইয়াছে। চক্ষুঃ প্রভৃতিতেও [অনুদ্‌ভূত] বিশেষগুণ রূপাদি থাকায় [চক্ষুঃ প্রভৃতিতে অব্যাপ্তি বারণের জন্য]

**उद्भूतेति। उद्भूतत्वं न जातिः, शुक्लत्वादिना साङ्कर्यात्। न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम्, उद्भूतरूपत्वादिना चाक्षुषादौ जनकतानु-**

प्रयोजनं वक्तुं चिन्तामणेः प्रत्यक्षकारणवादोक्तमनुस्मरन् उद्भूतत्वं निर्वक्ति—**उद्भूतत्व**मिति। **न जाति**रिति। **शङ्कर**मिश्रास्तूद्भूतत्वं जातिमाहुः। तैश्च रूपप्रत्यक्षसूत्रोपस्कारे—"उद्भवो रूपादिविशेषगुण-गतो जातिविशेष एव रूपत्वादिव्याप्य" इति। **साङ्कर्या**दिति। उद्भूतत्वाभाववति चक्षुरिन्द्रियरूपे शुक्लत्वं शुक्लत्वाभाववति रसादावुद्भूतत्वं शङ्खादिरूपे चोद्भूतत्व-शुक्लत्वयोः समावेशात् साङ्कर्यमिति भावः। **नानैवोद्**भूतत्वमिति। तथा च शुक्लत्वव्याप्योद्भूतत्वस्य शुक्लत्वाभावासामानाधिकरण्यान्न साङ्कर्यमिति भावः। **जनकत्वा**नुपपत्तेरिति। चाक्षुषप्रत्यक्षं प्रत्युद्भूतरूपत्वेन कारणता स्वीकरणीया। सा च न सम्भवति, एकैकस्य तस्य कारणत्वे व्यभिचारात्, एकस्यां व्यक्तौ तत्सत्त्वेऽपि व्यक्त्यन्तरे तदभावात्। समुदायस्य कारणत्वेऽपि तथैव

'উদ্‌ভূত' এই [বিশেষণটী] উক্ত হইয়াছে। উদ্‌ভূতত্বটী জাতি নহে। কারণ শুক্লত্বাদির সহিত সাঙ্কর্য্য হয়। শুক্লত্ব প্রভৃতির ব্যাপ্য উদ্‌ভূতত্বটী নানা—ইহা কিন্তু বলা যায় না। কারণ (তাহা হইলে) চাক্ষুষ বা স্পার্শনাদি প্রত্যক্ষে উদ্‌ভূতরূপত্ব বা উদ্‌ভূতস্পর্শত্বাদিরূপে উদ্‌ভূতরূপ বা উদ্‌ভূতস্পর্শের জনকত্ব উপপন্ন হইবে না। কিন্তু শুক্লত্ব বা

## বিবৃতি

ইন্দ্রিয়ের লক্ষণ হইতেছে—শব্দভিন্ন উদ্ভূত বিশেষগুণের অনাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব। যদি মনঃসংযোগাশ্রয়ত্ব মাত্র লক্ষণ হইত, তবে আকাশে অতিব্যাপ্তি হইত। কারণ আকাশ মনঃসংযোগের আশ্রয় বলিয়া উহাতে মনঃসংযোগাশ্রয়ত্ব আছে। এই অতিব্যাপ্তি বারণের জন্য "জ্ঞানকারণ" মনঃসংযোগাশ্রয়ত্বকে লক্ষণ বলিতে হইবে। তাহা হইলে আর আকাশে অতিব্যাপ্তি হইবে না। কারণ আকাশ মনঃসংযোগের আশ্রয় হইলেও জ্ঞানকারণ মনঃসংযোগের আশ্রয় নহে। এজন্য উহাতে জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব নাই।

যদি জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্বমাত্র লক্ষণ হইত, তবে আত্মা জ্ঞানকারণ মনঃসংযোগের আশ্রয় বলিয়া উহাতে জ্ঞানকারণ মনঃসংযোগের আশ্রয়ত্ব আছে বলিয়া অতিব্যাপ্তি হইত। এই অতিব্যাপ্তি বারণের জন্য শব্দভিন্ন উদ্ভূত বিশেষ গুণের অনাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব লক্ষণ বলিতে হইবে। তাহা হইলে আর আত্মাতে অতিব্যাপ্তি হয় না। কারণ আত্মা শব্দভিন্ন উদ্ভূত

**বিবৃতি**

বিশেষ গুণ—সুখ, দুঃখাদির আশ্রয় বলিয়া উহাতে শব্দভিন্ন উদ্ভূত বিশেষ গুণাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব আছে · শব্দভিন্ন উদ্ভূত বিশেষগুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব নাই।

যদি উদ্ভূত বিশেষগুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্বকে লক্ষণ বলা হইত, তবে আত্মাতে অতিব্যাপ্তি হইত না বটে, কিন্তু শ্রোত্রেন্দ্রিয়ে অব্যাপ্তি হইত। কারণ শ্রোত্র উদ্ভূত বিশেষগুণ শব্দের আশ্রয় বলিয়া উহাতে উদ্ভূত বিশেষগুণাশ্রয়ত্ব সামানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব আছে, কিন্তু উদ্ভূত বিশেষ গুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব নাই। শব্দভিন্নত্বটী উদ্ভূত বিশেষ গুণের বিশেষণ ইহলে এই অব্যাপ্তি হয় না। কারণ শ্রোত্র শব্দভিন্ন কোন উদ্ভূত বিশেষগুণের আশ্রয় নহে। এজন্য উহাতে শব্দভিন্ন উদ্ভূত বিশেষ-গুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব আছে।

যদি শব্দভিন্ন বিশেষগুণের অনাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব মাত্রই লক্ষণ হইত, তবে চক্ষুরিন্দ্রিয়ে অব্যাপ্তি হইত ; কারণ চক্ষুঃ শব্দভিন্ন বিশেষগুণ রূপের আশ্রয় বলিয়া উহাতে শব্দাভন্ন বিশেষগুণাশ্রয়ত্ব আছে, বিশেষগুণানাশ্রয়ত্ব নাই। উদ্ভূতত্বটী বিশেষ গুণের বিশেষণ হইলে আর অব্যাপ্তি হয় না। কারণ চক্ষুঃ কোন উদ্ভূত বিশেষগুণের আশ্রয় হয় না বলিয়া উহাতে শব্দভিন্ন উদ্ভূত বিশেষ-গুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব থাকে।

পরস্পরাত্যন্তাভাব-সমানাধিকরণ ধর্ম্মদ্বয়ের একত্র অবস্থিতির নাম সাঙ্কর্য্য। সমস্ত রূপে উদ্ভূতত্ব ধর্ম্মটী এক হইলে চক্ষুর অনুদ্ভূত রূপে শুক্লত্বটী উদ্ভূতত্বাভাবের সমানাধিকরণ এবং উদ্ভূত নীলে উদ্ভূতত্বটী শুক্লত্বাভাবের সমানাধিকরণ হইয়া উদ্ভূত শুক্লে উভয়ে একত্র অবস্থিত হওয়ায় শুক্লত্বাদির সহিত উদ্ভূতত্বের সাঙ্কর্য্য হয়। কিন্তু শুক্লাদি রূপের ব্যাপ্য উদ্ভূতত্বটী প্রতি রূপে ভিন্ন হইলে, উদ্‌ভূত শুক্লের উদ্ভূতত্বটী শুক্লত্ব-সমানাধিকরণ হইলেও শুক্লত্বাভাবের সমানাধিকরণ হয় না। কারণ শুক্লত্বাভাবের অধিকরণ নীলরূপে ঐ উদ্ভূতত্ব ধর্ম্মটী নাই। নীল রূপের ব্যাপ্য উদ্ভূতত্ব এবং শুক্ল রূপের ব্যাপ্য উদ্ভূতত্ব পরস্পর ভিন্ন। সুতরাং উদ্ভূতত্ব ও শুক্লত্ব পরস্পরাত্যন্তাভাব সমানাধিকরণ হইয়া একত্র অবস্থিত না হওয়ায় সাঙ্কর্য্য না হইলেও উদ্ভূত রূপত্ব ভিন্ন ভিন্ন হওয়ায় উদ্ভূতরূপত্বরূপে উদ্ভূতরূপ এক না হওয়ায়, চাক্ষুষ প্রত্যক্ষে উদ্ভূতরূপ একরূপে কারণ হইতে পারে না, ভিন্ন ভিন্ন রূপেই প্রত্যক্ষের কারণ—ইহা বলিতে হইবে। তাহাতে গৌরব হয়। সুতরাং অনুগত

पपत्तेः। किन्तु शुक्लत्वादि-व्याप्यं नानैवानुद्भूतत्वं, तदभावकूटश्चोद्भूतत्वम्। तच्च संयोगादावप्यस्ति। तथा च शब्देतरोद्भूतगुणः संयोगादिश्चक्षुरादावप्यस्त्यतो—विशेषेति। कालादिवारणाय—विशेष्यदलम्। इन्द्रियावयव-विषयसंयोगस्यापि प्राचां मते प्रत्यक्षजनकत्वादिन्द्रियावयव-वारणाय, नवीनमते कालादौ

व्यभिचारः, समुदायस्यैकत्रासम्भवात्। तथा च सर्वरूपसाधारणोद्भूतत्वस्याभावेनैकरूपेण कारणत्वासम्भवादिति भावः। **तदभावेति**। शुक्लत्वादिव्याप्य-नानानुद्भूतत्व-जात्याभाव समुदाय एवोद्भूतत्वम्। तथा चोक्तं **मणौ** प्रत्यक्षकारणवादे—"अनुद्भूतत्वं शुक्लत्वादिव्याप्यं नानाजातिस्तदभावावकूटस्तु प्रत्यक्षत्वे प्रयोजक" इति। **प्राचां**

নীলত্বাদির ব্যাপ্য অনুদ্ভূতত্বটী নানা। সেই নানা অনুদ্ভূতত্বের অভাবকূটই (অভাব সমুদায়ই) উদ্ভূতত্ব। তাহা (উক্তরূপ উদ্ভূতত্বটী) সংযোগ, বিভাগ প্রভৃতিতেও থাকে। তাহা হইলে শব্দভিন্ন উদ্ভূত গুণ সংযোগাদি চক্ষুঃ প্রভৃতিতেও আছে। [শব্দভিন্ন উদ্ভূত গুণের অনাশ্রয়ত্বটী চক্ষুঃ প্রভৃতিতে না থাকায় অব্যাপ্তি হয়] এই জন্য অর্থাৎ এই অব্যাপ্তি বারণের জন্য "বিশেষ" এই কথাটী উক্ত হইয়াছে। কালাদিতে [অব্যাপ্তি] বারণের জন্য বিশেষ্য দল অর্থাৎ জ্ঞান-কারণ মনঃসংযোগাশ্রয়ত্ব (উক্ত হইয়াছে)। [জ্ঞান-কারণ সংযোগাশ্রয়ত্বটী ইন্দ্রিয়ের লক্ষণ হইলে] প্রাচীনমতে ইন্দ্রিয়াবয়বের সহিত বিষয়ের সংযোগও প্রত্যক্ষ জ্ঞানের জনক হওয়ায় ইন্দ্রিয়ের অবয়ব [জ্ঞানের কারণীভূত ইন্দ্রিয়াবয়ব-বিষয় সংযোগের আশ্রয় হওয়ায় অতিব্যাপ্তি হয়, এই অতিব্যাপ্তি] বারণের অর্থাৎ ইন্দ্রিয়াবয়বে অতিব্যাপ্তি-বারণের জন্য এবং নব্য নৈয়া-

### বিবৃতি

কার্য্যকারণভাবের অনুরোধে উদ্ভূতত্ব ধর্ম্মটিকে এক বলিলে সাঙ্কর্য্য অনিবার্য্য। তাই বিশ্বনাথ বলিলেন—**উদ্ভূতরূপত্বাদিনা চাক্ষুষাদৌ জনকত্বানুপপত্তেঃ।**

যদি বিশেষটী গুণের বিশেষণ না হইত, যদি শব্দভিন্ন উদ্ভূত গুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব মাত্র লক্ষণ হইত, তবে চক্ষুঃ প্রভৃতিতে অব্যাপ্তি হইত। কারণ চক্ষুঃ প্রভৃতি শব্দভিন্ন উদ্ভূত গুণ সংযোগাদির আশ্রয় বলিয়া উহাতে শব্দভিন্ন উদ্ভূত গুণাশ্রয়ত্বই আছে, উদ্ভূত গুণানাশ্রয়ত্ব থাকে না। বিশেষটী গুণের বিশেষণ হইলে এই অব্যাপ্তি হয় না। কারণ চক্ষু প্রভৃতি কোন উদ্ভূত বিশেষ গুণের আশ্রয় হয় না বলিয়া উহাতে শব্দভিন্ন উদ্ভূত বিশেষগুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব আছে।

**रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूत-चक्षुःसंयोगाद्याश्रयस्य कालादेर्वारणाय मनःपदम्। ज्ञानकारणमित्यपि तद्वारणायैव। करणमिति। असाधारणं कारणं करणम्। असाधारणत्वं व्यापारवत्त्वम्॥५८॥**

मत इति। न्यायवार्त्तिकादिकृतां मते इत्यर्थः। **रूपाभा**वेति। कालादौ घटाद्यभावसत्त्वेऽपि न तत्प्रत्यक्षं, योग्यानुपलब्धेरभावादतो रूपाभावपर्यन्तानुधावनम्। **सन्निकर्ष**घटकतयेति। चक्षुःसंयुक्तविशेषणतारूप-सन्निकर्षघटकतया। **घटकत्वञ्च** तद्विषयताव्यापक-विषयतावत्त्वम्। यथात्रैव सन्निकर्षज्ञानीयविषयताव्यापकत्वस्य चक्षुःसंयोगनिष्ठविषयतायां सत्त्वेन चक्षुःसंयोगस्य सन्निकर्षघटकत्वम्। **कारणी**भूतेति। चाक्षुषप्रत्यक्षकारणीभूतेत्यर्थः। तथा च चाक्षुषप्रत्यक्ष-कारणस्य चक्षुःसंयुक्तविशेषणतारूपसन्निकर्षस्य घटकीभूतश्चक्षुः-संयोगोऽपि चाक्षुषप्रत्यक्षकारणं, तदाश्रयश्च कालादिरिति तत्रातिव्याप्तिवारणाय—मनःपदम्। **तद्वा**रणाय—कालादावतिव्याप्तिवारणाय॥५८॥

য়িকের মতে কাল প্রভৃতিতে রূপাভাব প্রত্যক্ষে সন্নিকর্ষ-ঘটকত্বরূপে [জ্ঞান] কারণীভূত চক্ষুঃসংযোগের আশ্রয় কালাদিতে [অতিব্যাপ্তি] বারণের জন্য [সংযোগের বিশেষণরূপে] 'মনঃ' পদ অর্থাৎ কালাদিতে রূপাভাব প্রত্যক্ষে চক্ষুঃসংযুক্ত-বিশেষণতাই জ্ঞান-কারণ সন্নিকর্ষ। উক্ত সন্নিকর্ষের অন্তর্গত চক্ষুঃসংযোগও সন্নিকর্ষঘটক হওয়ায় জ্ঞান-কারণ। কাল প্রভৃতি উক্ত জ্ঞান-কারণ চক্ষুঃসংযোগের আশ্রয় হওয়ায় কালাদিতে ইন্দ্রিয় লক্ষণের অতিব্যাপ্তি হয়। এই অতিব্যাপ্তি বারণের জন্য "মনঃ" পদ প্রযুক্ত হইয়াছে। কালে অতিব্যাপ্তি বারণের জন্য "জ্ঞানকারণ" এই কথাটীও প্রযুক্ত হইয়াছে। [কাল বিভু বলিয়া মনঃ-সংযোগের আশ্রয় হইলেও উক্ত মনঃ-সংযোগ জ্ঞানের কারণ নহে। সুতরাং কালাদি জ্ঞান-কারণ মনঃসংযোগের আশ্রয় না হওয়ায় কালাদিতে অতিব্যাপ্তি হয় না।] করণ হইতেছে অসাধারণ কারণ। [সেই] অসাধারণত্ব হইতেছে ব্যাপারবত্ত্ব ॥৫৮॥

**বিবৃতি**

যদি শব্দভিন্ন উদ্ভূত বিশেষগুণানাশ্রয়ত্ব মাত্রই ইন্দ্রিয়ের লক্ষণ হইত, তবে কালাদিতে লক্ষণের অতিব্যাপ্তি হইত। কারণ কালাদি কোন বিশেষ গুণের আশ্রয় হয় না বলিয়া উহাতে শব্দভিন্ন উদ্ভূত বিশেষগুণানাশ্রয়ত্ব আছে। এইজন্য লক্ষণে বিশেষ্যদল অর্থাৎ জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব প্রযুক্ত হইয়াছে। তাহা হইলে আর কালাদিতে অতিব্যাপ্তি হইবে না। কারণ কালাদি জ্ঞানকারণ মনঃসংযোগের আশ্রয় নহে বলিয়া উহাতে জ্ঞানকারণ মনঃসংযোগাশ্রয়ত্ব নাই।

**বিবৃতি**

যদি শব্দভিন্ন উদ্ভূত বিশেষগুণের অনাশ্রয়ত্বের সমানাধিকরণ জ্ঞানকারণ সংযোগাশ্রয়ত্ব মাত্র লক্ষণ হইত, তবে ইন্দ্রিয়াবয়বে এই লক্ষণের অতিব্যাপ্তি হইত। কারণ প্রাচীন নৈয়ায়িকের মতে বিষয়ের সহিত ইন্দ্রিয়াবয়বের সংযোগ জ্ঞানকারণ বলিয়া উহাতে শব্দভিন্ন বিশেষগুণানাশ্রয়ত্ব সমানাধিকরণ জ্ঞানকারণ সংযোগের আশ্রয়ত্ব আছে। আরও কথা, নব্য নৈয়ায়িকের মতে কালে রূপাভাব প্রত্যক্ষের হেতু সন্নিকর্ষ হইতেছে চক্ষুঃসংযুক্ত-বিশেষণতা। চক্ষুঃসংযুক্ত কালে রূপাভাব বিশেষণ হওয়ায় উহাতে চক্ষুঃসংযুক্ত-বিশেষণতা আছে। উহাই সন্নিকর্ষরূপে প্রত্যক্ষের হেতু। উহা যেমন প্রত্যক্ষের হেতু, উহার ঘটক চক্ষুঃসংযোগও প্রত্যক্ষের হেতু। কাল ঐ চক্ষুঃসংযোগের আশ্রয় হওয়ায় উহাতে ইন্দ্রিয় লক্ষণের অতিব্যাপ্তি হয়। এজন্য জ্ঞানকারণ মনঃসংযোগশ্রয়ত্বকে লক্ষণ বলিতে হইবে। তাহা হইলে আর ইন্দ্রিয়াবয়বে বা কালে অতিব্যাপ্তি হইবে না। কারণ ইন্দ্রিয়াবয়ব বা কাল জ্ঞানকারণ মনঃসংযোগের আশ্রয় না হওয়ায় উহাতে জ্ঞানকারণ মনঃসংযোগের আশ্রয়ত্ব থাকে না। সুতরাং ইন্দ্রিয়ের নির্দোষ লক্ষণ হইল—**শব্দভিন্ন উদ্ভূত বিশেষগুণের অনাশ্রয়ত্বের সমানাধিকরণ জ্ঞানকারণ মনঃসংযোগের আশ্রয়ত্ব।**

**টিপ্পনী**

সাংখ্য, বেদান্ত প্রভৃতি শাস্ত্রে বাক্‌, পাণি, পাদ, পায়ু ও উপস্থ নামক পাঁচটি কর্মেন্দ্রিয় স্বীকৃত হইয়াছে। স্থানবিশেষে এই কর্মেন্দ্রিয়ের ব্যাপার সুস্পষ্ট অভিব্যক্ত হয় বলিয়া উহার কতকগুলি বিশেষ স্থান নির্দিষ্ট হইলেও প্রকৃতপক্ষে সর্ব্বশরীরে কর্মেন্দ্রিয়ের ব্যাপার উপলব্ধ হওয়ায় উহা ত্বগিন্দ্রিয়ের ন্যায় সর্ব্বশরীরব্যাপী। **প্রত্যভিজ্ঞা**বিমর্শিণীতে (৩।১।১১) অভিনব গুপ্তপাদ ইহাই বলিয়াছেন *। কিন্তু ন্যায়, বৈশেষিক শাস্ত্রে বাক্‌, পাণি প্রভৃতি—ইন্দ্রিয় বলিয়া স্বীকৃত হয় নাই। তাৎপর্য্য-টীকায় বাচস্পতি মিশ্র বলিয়াছেন—স্বস্ববিষয়োপলব্ধিসাধনত্বমেব সমানাসমান-জাতীয়-ব্যবচ্ছেদকতয়া লক্ষণম্—অর্থাৎ যাহা বিষয়ের উপলব্ধি সাধন, তাহাই ইন্দ্রিয়। বাক্‌, পাণি প্রভৃতি উপলব্ধির সাধন না হওয়ায় ইন্দ্রিয় হইতে পারে না। জয়ন্ত ভট্ট ইহা সমর্থন করিয়া পরে বলিয়াছেন—"কণ্ঠোঽন্ননিগরণেন, স্তনকলশালিঙ্গনাদিনা বক্ষো, ভারবহনেন চাংসদ্বয়মিন্দ্রিয়মুচ্যতে ন কথম্" ? ( ন্যায়মঞ্জরী উঃ ভাগ ৫৪ পৃঃ দ্রষ্টব্য ) অর্থাৎ অসাধারণ কার্য্যবিশেষের হেতু বলিয়া বাক্‌, পাণি প্রভৃতিকে ইন্দ্রিয় বলিলে কণ্ঠ, বক্ষঃ প্রভৃতিকেও ইন্দ্রিয় বলিতে হয়। তাহা কিন্তু কেহই বলেন নাই।

* সর্বদেহব্যাপকানি চ কর্মেন্দ্রিয়াণ্যহঙ্কারবিশেষাত্মকানি। তেন ছিন্নহস্তো বাহুভ্যামাদদানঃ পাণি-নৈব্যাদত্তে। এবমন্যৎ। কেবল তত্তৎস্ফুটপূর্ণবৃত্তিলাভস্থানত্বাৎ পঞ্চাঙ্গুলিরূপমধিষ্ঠানমস্যোচ্যতে।

**विषयेन्द्रियसम्बन्धो व्यापारः सोऽपि षड्विधः।**
**द्रव्यग्रहस्तु संयोगात्, संयुक्तसमवायतः ॥५९॥**
**द्रव्येषु समवेतानां, तथा तत्समवायतः।**
**तत्रापि समवेतानां, शब्दस्य समवायतः ॥६०॥**

**विषयेन्द्रियसम्बन्ध इति। व्यापारः सन्निकर्षः। षड्विधं सन्निकर्षमुदाहरणद्वारा प्रदर्शयति—द्रव्यग्रह इति। द्रव्यप्रत्यक्षमिन्द्रियसंयोग-जन्यं, द्रव्यसमवेत-प्रत्यक्षमिन्द्रियसंयुक्त-समवाय-जन्यम्। एवमग्रेऽपि। वस्तुतस्तु द्रव्यचाक्षुषं प्रति चक्षुःसंयोगः कारणम्, द्रव्यसमवेत-चाक्षुषं प्रति चक्षुःसंयुक्तसमवायः कारणं, द्रव्यसमवेत-समवेत-चाक्षुषं प्रति चक्षुःसंयुक्त-समवेत-समवायः।**

तज्जन्यत्वे सति तज्जन्यजनकत्वरूपस्य व्यापारत्वस्य नित्ये श्रोत्रसम्बन्ध-समवाये ऽसम्भवाद् व्यापारपदस्यार्थान्तरमाह—**व्यापारः** सन्निकर्ष इति। वस्तुतस्तु व्यापारलक्षणप्रविष्टं तज्जन्यत्वं तदधीनसत्त्वाकत्वं बोध्यम्। तेन शब्दप्रतियोगिक-श्रोत्रानुयोगिक-समवायस्यैव प्रत्यक्षजनकतया तादृशस्याकाशात्मक-श्रोत्रसत्त्वाधीनसत्ताकत्वान्न व्यापारत्वविरोध इति मन्तव्यम्। **द्रव्य**-प्रत्यक्षं—द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षम्। एवमग्रेऽपि। ननु द्रव्यप्रत्यक्षे इन्द्रियसन्निकर्षस्य कारणत्वे त्वक्प्रभासंयोगात् प्रभाचाक्षुषापत्तिः। प्रत्यक्षहेतोरिन्द्रिय-सन्निकर्षस्य तत्र सत्त्वादतो विशिष्य कार्यकारणभावमाह—**वस्तुतस्त्विति**। न चात्मप्रत्यक्षानुरोधेन मनःसंयोगस्य ज्ञानादि-प्रत्यक्षानुरोधेन मनःसंयुक्तसमवायस्य सन्निकर्षत्वेऽपि चक्षुःसंयोगस्य चक्षुःसंयुक्त-समवायस्य वा सन्निकर्षत्वे प्रमाणाभावः, परमाणुमादाय चक्षुःसंयुक्त-समवेत-समवायेनैव द्व्यणुकादेश्चाक्षुषोपपत्तेरिति वाच्यं, एकत्रेन्द्रियसंयोगस्य प्रत्यक्षहेतुत्वेऽन्यत्रापि तत्संयोगस्य हेतुत्वा-

**বিষয়েন্দ্রিয়-সম্বন্ধঃ** এই গ্রন্থে ব্যাপার হইতেছে সন্নিকর্ষ। **দ্রব্যগ্রহঃ** এই গ্রন্থে ষড়্‌বিধ সন্নিকর্ষ উদাহরণ দ্বারা প্রদর্শিত হইতেছে। ইন্দ্রিয়ের সংযোগ হইতে দ্রব্যের প্রত্যক্ষ উৎপন্ন হয়। ইন্দ্রিয়-সংযুক্ত সমবায় হইতে দ্রব্য-সমবেতের (রূপাদি গুণ, কর্ম্ম ও সামান্যের) প্রত্যক্ষ হয়। এইরূপ অগ্রেও অর্থাৎ ইন্দ্রিয়-সংযুক্ত-সমবেত-সমবায় হইতে দ্রব্য-সমবেত রূপাদিতে সমবেত রূপত্বাদি জাতির প্রত্যক্ষ উৎপন্ন হয়। বস্তুতঃ দ্রব্যের চাক্ষুষ প্রত্যক্ষের প্রতি চক্ষুঃসংযোগ কারণ, দ্রব্যসমবেত গুণাদির চাক্ষুষ প্রত্যক্ষের প্রতি চক্ষুঃসংযুক্ত-সমবায়, দ্রব্য-সমবেতে সমবেত রূপত্বাদির চাক্ষুষ

**एवमन्यत्रापि विशिष्यैव कार्यकारणभावः। परन्तु पृथिवीपरमाणु-नीले नीलत्वं पृथिवीत्वञ्च चक्षुषा कथं न गृह्यते ? तत्र परम्परयोद्भूतरूप-सम्बन्धस्य महत्त्वसम्बन्धस्य च सत्त्वात्। तथा हि—नीले नीलत्वजातिरेकैव घटनीले परमाणुनीले च वर्त्तते। तथा च महत्त्वसम्बन्धो घटनीलमादाय वर्त्तते। उद्भूतरूपसम्बन्धस्तूभयमादायैव वर्त्तते। एवं पृथिवीत्वेऽपि घटादिकमादाय**

वश्यकत्वात् ; अन्यथा चक्षुःसंयुक्त-समवेत-समवायस्यैकस्य सन्निकर्षत्वे नानाद्रव्यसंयोगस्य सन्निकर्षघटकतया हेतुत्वकल्पनायां गौरवप्रसङ्गात्। चक्षुःसंयुक्तसमवेतसमवायघटकतया चक्षुःसंयोगस्यावश्यकत्वे तस्यैव द्रव्यचाक्षुषं प्रति हेतुत्वौचित्यात्। ननु चक्षुःसंयुक्त-समवेत-समवायस्य द्रव्यसमवेत-समवेतचाक्षुषं प्रति हेतुत्वे परमाणुनीले नीलत्वस्य प्रत्यक्षं स्यात्, घटनीलमादाय तत्र तादृशसन्निकर्षसत्त्वादतो विशिष्टस्यैव तस्य प्रत्यक्षहेतुत्वं व्यवस्थापयितु-माह—**परं** त्विति। **तत्र**—पृथिवीपरमाणुनीलवृत्ति-नीलत्वे पृथिवीपरमाणुवृत्तिपृथिवीत्वे च। **परम्परये**ति। स्वाश्रय-समवेत-समवाय-सम्बन्धेनेत्यर्थः। स्वं महत्त्वमुद्भूतरूपञ्च, तदाश्रयो घटस्तत्समवेतं नीलरूपं, तत्र समवेतं नीलत्वम्, तच्च घट-नील-परमाणुनील-साधारणमेकमेव। तथा च स्वाश्रय-समवेत-समवाय सम्बन्धेनोद्भूतरूपस्य महत्त्वस्य च घट-नीलवृत्तिनीलत्वे सत्त्वात् परमाणुनीलवृत्ति-नीलत्वेऽपि तत्सम्बन्धेनैव तयोः सत्त्वेन परमाणु-नीले नीलत्वस्यापि प्रत्यक्षं स्यादिति भावः। इदञ्च स्वयमेव विवृणोति—**तथा ही**ति।

প্রত্যক্ষের প্রতি চক্ষুঃসংযুক্ত-সমবেত-সমবায় কারণ। এইরূপ অন্যত্রও অর্থাৎ স্পার্শনাদি প্রত্যক্ষের প্রতিও বিশেষ করিয়াই অর্থাৎ ভিন্ন ভিন্নরূপে কার্য্য-কারণভাব হইবে অর্থাৎ দ্রব্যের ত্বাচ্ প্রত্যক্ষের প্রতি ত্বক্‌সংযোগ এবং দ্রব্য সমবেতের ত্বাচ্ প্রত্যক্ষের প্রতি ত্বক্‌সংযুক্ত-সমবায় কারণ—এইরূপ ভিন্ন ভিন্ন কার্য্য-কারণভাব হইবে। **পরন্তু** অর্থাৎ উদ্ভূতরূপ এবং মহত্ত্ব যদি প্রত্যক্ষের কারণ হয়, তবে পৃথিবীপরমাণুর নীলে নীলত্ব বা পৃথিবীপরমাণুতে পৃথিবীত্ব চক্ষুর দ্বারা কেন গৃহীত হয় না ? কারণ তাহাতে (নীলত্বে বা পৃথিবীত্বে) পরম্পরায় উদ্ভূতরূপের সম্বন্ধ এবং মহত্ত্বের সম্বন্ধ তো আছে। তাহা এইরূপ—নীলবৃত্তি একই নীলত্ব জাতি ঘটনীলে ও পরমাণুনীলে বর্ত্তমান আছে অর্থাৎ যে নীলত্ব জাতি ঘটনীলে আছে, উহাই পরমাণুনীলে থাকে। কারণ নীলত্ব জাতি এক। সুতরাং ঘটের নীলকে অবলম্বন করিয়া মহত্ত্ব সম্বন্ধ আছে অর্থাৎ ঘটনীলের নীলত্বে যেরূপ স্বাশ্রয়-সমবেত-সমবায়সম্বন্ধে মহত্ত্ব থাকে। পরমাণুনীলের

**महत्त्वसम्बन्धो बोध्यः। एवं वायौ तदीयस्पर्शादौ च सत्तायाश्चाक्षुषप्रत्यक्षं स्यात्। तस्मादुद्भूतरूपावच्छिन्न-महत्त्वावच्छिन्न-चक्षुःसंयुक्त-समवायस्य द्रव्यसमवेत-**

**उभयं**—घटनीलं परमाणुनीलञ्च। **महत्त्व**सम्बन्ध इति। स च सम्बन्धः स्वाश्रय समवायः। स्वं महत्त्वं, तदाश्रयो घटस्तत्र पृथिवीत्व-समवायः। तच्च पृथिवीत्वमेकम्। अतस्तत् पृथिवीत्वं पृथिवी-परमाणावपि वर्त्तते। तत्र स्वाश्रयसमवायेन महत्त्वमपि वर्त्तते। एवमुद्भूतरूपोऽपीति पृथिवीपरमाणौ पृथिवीत्वप्रत्यक्षं स्यादिति भावः। **सत्तायाश्चा**क्षुषेति। घटगत-सत्ताया वायुवृत्तिसत्तायाश्चैक्याद् घटादिकमादाय स्वाश्रयसमवायेन वायुवृत्तिसत्तायामुद्भूतरूपस्य महत्त्वस्य च सत्त्वादिति भावः। संयुक्तसमवेतसमवायेन संयोगस्यान्यथासिद्धिं परमाणुपृथिवीत्वादीनां प्रत्यक्षञ्च परिहरति—**तस्मादि**ति। उक्तापत्तिपरिहारायेत्यर्थः। **उद्भूते**ति। उद्भूतरूपावच्छिन्नेति महत्त्वावच्छिन्नेति च चक्षुःसंयुक्तपदार्थैकदेशस्य चक्षुः-संयोगस्य विशेषणम्। यत्र चक्षुःसंयोगो वर्त्तते महत्त्वमुद्भूतरूपञ्च, तत्रैव स संयोगो महत्त्वोद्-

নীলত্ব, ঐ নীলত্ব বলিয়া উহাতে ঐ সম্বন্ধেই মহত্ত্ব থাকিবে। উদ্‌ভূত রূপের সম্বন্ধ উভয়কে (ঘটনীল ও পরমাণুনীলকে) অবলম্বন করিয়াই থাকে অর্থাৎ ঘটনীলের নীলত্বে যেরূপ স্বাশ্রয়-সমবেত-সমবায় সম্বন্ধে উদ্‌ভূত রূপ থাকে, পরমাণুনীলের নীলত্বেও ঐ সম্বন্ধেই উদ্‌ভূত রূপ থাকিবে। কারণ উভয় স্থলেই নীলত্ব এক। অথবা পরমাণুতে উদ্‌ভূত রূপ থাকায় পরমাণুর নীলকে অবলম্বন করিয়াই নীলত্বে স্বাশ্রয়-সমবেত-সমবায় সম্বন্ধে উদ্ভূত রূপ থাকিবে। ঐরূপ পৃথিবী-পরমাণুর পৃথিবীত্বেও ঘটাদিকে অবলম্বন করিয়া মহত্ত্ব সম্বন্ধ জানিবে অর্থাৎ সমস্ত পৃথিবীতে পৃথিবীত্ব জাতি এক বলিয়া ঘট-বৃত্তি পৃথিবীত্বে যেরূপ স্বাশ্রয়-সমবায় সম্বন্ধে মহত্ত্ব থাকে, পৃথিবী-পরমাণুগত পৃথিবীত্বে ঐ সম্বন্ধেই মহত্ত্ব থাকিবে। এইরূপ বায়ুবৃত্তি বা বায়বীয় স্পর্শাদিবৃত্তি সত্তা জাতিরও চাক্ষুষ প্রত্যক্ষ হউক। [কারণ পূর্ব্বোক্ত প্রকারে ঘট বা ঘটনীলকে অবলম্বন করিয়া স্বাশ্রয়-সমবায় বা স্বাশ্রয়-সমবেত-সমবায় সম্বন্ধে বায়ুগত বা বায়বীয়-স্পর্শগত সত্তাতে উদ্‌ভূত রূপ এবং মহত্ত্ব থাকে। সুতরাং পরমাণু-নীলের নীলত্বে বা পৃথিবীপরমাণুর পৃথিবীত্বে বা বায়ুর সত্তাতে উদ্‌ভূতরূপাদি থাকায় তাহাদের চাক্ষুষ প্রত্যক্ষ কেন হয় না? যেহেতু তাহাদের প্রত্যক্ষ হয় না] সেই হেতু দ্রব্যসমবেত গুণাদির চাক্ষুষ প্রত্যক্ষে উদ্ভূতরূপাবচ্ছিন্ন মহত্ত্বাবচ্ছিন্ন অর্থাৎ উদ্‌ভূতরূপ ও মহত্ত্বের সমানাধিকরণ চক্ষুঃসংযুক্ত-সমবায়কে এবং দ্রব্য-সমবেত

चाक्षुषप्रत्यक्षे, तादृश-चक्षुःसंयुक्त-समवेत-समवायस्य द्रव्य-समवेत-समवेत-चाक्षुषे कारणत्वं वाच्यम्। इत्थञ्च परमाणु-नीलादौ न नीलत्वादि-ग्रहः, परमाणौ चक्षुः-संयोगस्य महत्त्वावच्छिन्नत्वाभावात्। एवं वाय्वादौ न सत्त्वादि-चाक्षुषं; तत्र चक्षुःसंयोगस्य रूपावच्छिन्नत्वाभावात्। एवं यत्र घटस्य पृष्ठावच्छेदेनालोक-संयोगः, चक्षुःसंयोगस्त्वग्रावच्छेदेन, तत्र घटप्रत्यक्षाभावादालोकसंयोगावच्छिन्नत्वं चक्षुःसंयोगे विशेषणं देयम्। एवं द्रव्यस्पार्शन-प्रत्यक्षे त्वक्संयोगः कारणं, द्रव्य-समवेत-स्पार्शन-प्रत्यक्षे त्वक्-संयुक्तसमवायः, द्रव्यसमवेत-समवेत-स्पार्शनप्रत्यक्षे

भूतरूपावच्छिन्नः सन् प्रत्यक्ष-हेतुर्भवति। एवञ्च पृथिवीपरमाणौ चक्षुःसंयोगोद्भूतरूपयोः सत्त्वेऽपि महत्त्वाभावात् पृथिवीत्वादिकं न प्रत्यक्षम्। न वा वायौ सत्तायाश्चाक्षुषं प्रत्यक्षं, तत्र महत्त्वसत्त्वेऽप्युद्भूतरूपाभावात्। तथा च परमाणोर्महत्त्वाभावेन महत्त्वावच्छिन्न-चक्षुःसंयुक्तसमवेतसमवायस्य त्र्यसरेणावभावात् तत्प्रत्यक्षानुपपत्तिरतः संयोगोऽपि सन्नि-कर्षः स्वीकार्यः। एवं महत्त्वावच्छिन्न-चक्षुःसंयुक्त-समवेत-समवायस्य त्रसरेणुरूपेऽभावात् तच्चाक्षुषानुपपत्त्या संयुक्तसमवायोऽपि सन्निकर्षः स्वीकार्य इति भावः। **तादृशेति**। महत्त्वोद्भूतरूपावच्छिन्नेत्यर्थः। **इत्थञ्च**—महत्त्वोद्भूतरूपावच्छिन्न-चक्षुःसंयोगस्य कारणत्वे च। **महत्त्वाव**च्छिन्नत्वाभावादिति। परमाणोर्महत्त्वाभावादिति भावः। **वाय्वादा-विति**। आदिना भर्जनकपालस्थवह्न्यादेः परिग्रहः। **रूपा**वच्छिन्नत्वाभावात्—उद्भूत-

সমবেত গুণত্বাদির প্রত্যক্ষে সেইরূপ চক্ষুঃসংযুক্ত-সমবেত-সমবায়কে অর্থাৎ উদ্ভূত-রূপাবচ্ছিন্ন-মহত্ত্বাবচ্ছিন্ন চক্ষুঃসংযুক্ত-সমবেত-সমবায়কে কারণ বলিতে হইবে। তাহা হইলে পরমাণুর নীলাদিতে নীলত্বাদির প্রত্যক্ষ হইবে না। কারণ পরমাণুগত চক্ষুঃ-সংযোগ মহত্ত্বাবচ্ছিন্ন নহে। এইরূপ বায়ু প্রভৃতিতে সত্তা প্রভৃতির চাক্ষুষ প্রত্যক্ষও হইবে না। কারণ সেখানে (বায়ু প্রভৃতিতে) চক্ষুঃসংযোগ উদ্ভূতরূপাবচ্ছিন্ন নহে। এইরূপ যেখানে ঘটের পৃষ্ঠভাগে আলোকসংযোগ, কিন্তু অগ্রভাগে চক্ষুঃসংযোগ; সেখানে ঘটের প্রত্যক্ষ না হওয়ায় আলোক-সংযোগাবচ্ছিন্নত্বকে চক্ষুঃসংযোগে বিশেষণ দিতে হইবে অর্থাৎ আলোক-সংযোগ-সমানাধিকরণ চক্ষুঃসংযোগই প্রত্যক্ষের কারণ। এইরূপ দ্রব্যের স্পার্শন প্রত্যক্ষে ত্বক্সংযোগ কারণ। দ্রব্য-সমবেতের (স্পর্শ, পৃথক্ত্ব সংখ্যা প্রভৃতির) স্পার্শন প্রত্যক্ষে ত্বক্-সংযুক্ত-সমবায়, দ্রব্য-সমবেত-সমবেতের (স্পর্শত্ব প্রভৃতির) স্পার্শন প্রত্যক্ষে ত্বক্সংযুক্ত-সমবেত-সমবায় কারণ।

त्वक्संयुक्त-समवेत-समवायः कारणम्। अत्रापि महत्त्वावच्छिन्नत्वमुद्भूतस्पर्शा-वच्छिन्नत्वञ्च पूर्ववदेव बोध्यम्। एवं गन्धप्रत्यक्षे घ्राणसंयुक्त-समवायः, गन्ध-समवेतस्य घ्राणजन्य-प्रत्यक्षे घ्राणसंयुक्त-समवेत-समवायः कारणम्। एवं रासन-प्रत्यक्षे रसनासंयुक्त-समवायः, रससमवेतस्य रासनप्रत्यक्षे रसनासंयुक्त-समवेत-समवायः कारणम्। शब्दप्रत्यक्षे श्रोत्रावच्छिन्न-समवायः, शब्दसमवेत-श्रावण-प्रत्यक्षे श्रोत्रावच्छिन्न-समवेत-समवायः कारणम्। अत्र सर्वं प्रत्यक्षं लौकिकं बोध्यम्। वक्ष्यमाणमलौकिकं प्रत्यक्षमिन्द्रियसंयोगादिकं विनापि भवति। एव-मात्मनः प्रत्यक्षे मनःसंयोगः, आत्मसमवेत-मानसप्रत्यक्षे मनःसंयुक्त-समवायः,

रूपानवच्छिन्नत्वात्, तत्र तत्रोद्भूतरूपाभावादिति भावः। **अत्रापि**—स्पार्शनप्रत्यक्ष-कारणीभूत-त्वक्सन्निकर्षेऽपि। **पूर्ववत्**—चक्षुःसंयोगवत्। अन्यथा घटस्पर्शमादाय पर-माणुस्पर्शे प्रभास्पर्शे वा त्वक्संयुक्त-समवेत-समवायस्य सत्त्वात् स्पर्शत्वस्पार्शनापत्तिर्दुर्वारा स्यात्। तस्मात् परमाणुघटित-त्वक्सन्निकर्षेण परमाणु-स्पर्शे स्पर्शत्व स्पार्शनवारणाय त्वक्संयोगे महत्त्वावच्छिन्नत्वं, प्रभाघटितसन्निकर्षेण प्रभास्पर्शे स्पर्शत्व-स्पार्शन-वारणाय चोद्भूतस्पर्शावच्छिन्नत्वादि विशेषणं बोध्यम्। प्रभायां सत्तास्पार्शन-वारणं त्वक्संयोगे उद्भूतरूपावच्छिन्नत्वनिवेशान्न भवतीति स्पर्शानुधावनम्। श्रोत्र-घ्राण-रसनानां द्रव्या-ग्राहकत्वाद् रसनादिसंयोगस्य न प्रत्यक्षहेतुता। अतः घ्राणसंयोगं विहायान्यदाह—**गन्धप्रत्यक्ष** इति। **श्रोत्रा**वच्छिन्नेति। आकाशात्मक-श्रोत्राणां सर्वशब्दसम्बन्धात् सकलपुरुषाणां सर्वशब्दप्रत्यक्षापत्तिरतः श्रोत्रावच्छिन्नेति समवायविशेषणम्। नन्वेवं

এইখানেও অর্থাৎ দ্রব্যাদির স্পার্শন প্রত্যক্ষেও পূর্ব্বের ন্যায়ই মহত্ত্বাবচ্ছিন্নত্ব এবং উদ্‌ভূতস্পর্শাবচ্ছিন্নত্ব বুঝিতে হইবে অর্থাৎ উদ্‌ভূতস্পর্শাবচ্ছিন্ন এবং মহত্ত্বাবচ্ছিন্ন ত্বক্-সংযোগ প্রভৃতি স্পার্শন প্রত্যক্ষের কারণ বুঝিতে হইবে। এইরূপ গন্ধের প্রত্যক্ষে ঘ্রাণ-সংযুক্ত-সমবায়, গন্ধসমবেতের (গন্ধত্ব প্রভৃতির) ঘ্রাণেন্দ্রিয় জন্য-প্রত্যক্ষে ঘ্রাণ-সংযুক্ত-সমবেত-সমবায়; রাসনপ্রত্যক্ষে রসনাসংযুক্ত-সমবায়, রসসমবেতের (রসত্ব প্রভৃতির) প্রত্যক্ষে রসনাসংযুক্ত-সমবেত-সমবায় কারণ। শব্দের প্রত্যক্ষে শ্রোত্রাবচ্ছিন্ন সমবায়, শব্দ-সমবেতের (শব্দত্ব প্রভৃতির) শ্রাবণ প্রত্যক্ষে শ্রোত্রাব-চ্ছিন্ন-সমবেত-সমবায় কারণ। এই স্থলে সমস্ত প্রত্যক্ষ লৌকিক বুঝিতে হইবে। বক্ষ্যমাণ অলৌকিক প্রত্যক্ষ ইন্দ্রিয়সংযোগ প্রভৃতি ব্যতীতই হইয়া থাকে। এইরূপ

**तद्वृत्तीनां समवेत-समवायेन तु ग्रहः।**
**विशेषणतया तद्वदभावानां ग्रहो भवेत् ॥६१॥**

**आत्म-समवेत-समवेत-मानसप्रत्यक्षे मनःसंयुक्त-समवेत-समवायः कारणम्। अभावप्रत्यक्षे समवायप्रत्यक्षे चेन्द्रियसम्बद्ध-विशेषणता हेतुः; वैशेषिकमते तु समवायो न प्रत्यक्षः। अत्र यद्यपि विशेषणता नानाविधा, तथा हि—भूतलादौ घटाद्यभावः स्वसंयुक्त-विशेषणतया गृह्यते, संख्यादौ रूपाद्यभावः स्वसंयुक्त-समवेत-विशेषणतया; संख्यात्वादौ रूपाद्यभावः स्वसंयुक्त-समवेत-समवेत-विशेषणतया; शब्दाभावः केवलश्रोत्रावच्छिन्न-विशेषणतया; कादौ खत्वाद्यभावः श्रोत्रावच्छिन्न-**

संयोगस्य प्रत्यक्षकारणत्वे शुक्तिरजतादि-प्रत्यक्षं न स्यात्, तत्रेन्द्रियसंयोगाभावादत आह—**अत्रे**ति। **इन्द्रिय**सम्बद्धेति। यदा घटाभाववद् भूतलमित्याद्याकारको भूतलादि-विशेष्यको घटाद्यभावप्रत्ययस्तदेन्द्रियसम्बद्धविशेषणता सन्निकर्षश्चक्षुरादीन्द्रियसम्बद्धे भूतलादौ घटाद्यभावानां विशेषणत्वात्। उपलक्षणञ्चैतदिन्द्रियसम्बद्धविशेष्यत्वस्यापि। तेन भूतले घटाभाव इत्याद्यभावविशेष्यक-प्रत्यक्षस्य नानुपपत्तिस्तत्रापि घटाद्यभावाना-मिन्द्रियसम्बद्धभूतलादौ विशेष्यत्वादिति भावः। **न प्रत्यक्ष** इति। सम्बन्धप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात् समवायस्यैकतया युगपद् भावि-भूत सकल-तदाश्रयव्यक्तीनां ज्ञानासम्भवादिति भावः। **न्यायमते** तु यावदाश्रयप्रत्यक्षस्य कार्यं न सम्बन्धप्रत्यक्षम्, अनुगत-सम्बन्धस्याऽभावात्। किन्तु संयोगप्रत्यक्षम्। समवायश्च न संयोगस्तस्मादसौ प्रत्यक्ष इति। **स्वसंयुक्त**विशेषणतयेति। स्वं चक्षुस्तत्संयुक्तं भूतलं, तत्र विशेषणं घटा-भावस्तस्मात् स्वसंयुक्तविशेषणतारूपाच्चक्षुःसन्निकर्षाद् घटाभावग्रह इति भावः। एवमग्रेऽपि

আত্মপ্রত্যক্ষে মনঃসংযোগ, আত্মসমবেতের (জ্ঞান প্রভৃতির) মানস প্রত্যক্ষে মনঃসংযুক্ত-সমবায়, আত্মসমবেত-সমবেতের (জ্ঞানত্ব প্রভৃতির) মানস প্রত্যক্ষে মনঃসংযুক্ত-সমবেত-সমবায় কারণ। অভাবের প্রত্যক্ষে ও সমবায়ের প্রত্যক্ষে ইন্দ্রিয়সম্বদ্ধ-বিশেষণতা কারণ। বৈশেষিকমতে কিন্তু সমবায় প্রত্যক্ষ নহে। এই স্থলে যদিও বিশেষণতা নানাপ্রকার। তাহা যেমন—ভূতল প্রভৃতিতে ঘট প্রভৃতির অভাব স্ব-(ইন্দ্রিয়) সংযুক্তবিশেষণতা সম্বন্ধ দ্বারা গৃহীত (প্রত্যক্ষ) হইয়া থাকে। সংখ্যা-প্রভৃতিতে রূপ-প্রভৃতির অভাব ইন্দ্রিয়-সংযুক্ত-সমবেত-বিশেষণতা সম্বন্ধ দ্বারা, সংখ্যাত্ব প্রভৃতিতে রূপ প্রভৃতির অভাব ইন্দ্রিয় সংযুক্ত-সমবেত-সমবেত-বিশেষণতা দ্বারা, শব্দের

**पक्षता। यत्र सिषाधयिषाऽस्ति, तत्र सिद्धौ सत्यामसत्यामपि पक्षता। यत्र तु सिद्धिरस्ति, सिषाधयिषा च नास्ति, तत्र न पक्षता, सिषाधयिषाविरहविशिष्टसिद्धेः सत्त्वात्। ननु यत्र परामर्शानन्तरं सिद्धिस्ततः सिषाधयिषा, तत्र सिषाधयिषाकाले**

सिषाधयिषा सिद्धिश्च, तत्र सिषाधयिषाविरह-रूप-विशेषणाभावाद् विशिष्टाभावरूपा पक्षता। यत्र सिद्धि-सिषाधयिषे नस्तस्तत्र सिषाधयिषा-विरहरूप-विशेषणसत्त्वेऽपि सिद्धि-रूपविशेष्याभावाद् विशिष्टाभावरूपा पक्षता। एवं यत्र सिषाधयिषाऽस्ति सिद्धिश्च नास्ति, तत्र विशेष्यविशेषणयोरुभयोरभावाद् विशिष्टाभावरूपा पक्षतेति त्रिषु स्थानेषु पक्षता-सत्त्वादनुमितिर्नान्यत्रेति भावः। **सत्यामसत्याम**पीति। सत्यामूभयाभाव-प्रयुक्तस्याऽसत्यां विशेष्याभावमात्रप्रयुक्तस्योक्तविशिष्टाभावस्य सत्त्वादिति भावः। **सत्यामसत्या**मपीति। सत्यां विशेषणाभावमात्र प्रयुक्तस्याऽसत्यां तूभयाभावप्रयुक्तस्य विशिष्टाभावस्य सत्त्वादिति भावः। पक्षता-विरहस्थलं दर्शयति—**यत्र त्वि**त्यादिना। **सिद्धेः** सत्त्वा-दिति। सिषाधयिषाविरहविशिष्ट-सिद्धेः सत्त्वेन तदभावरूप-पक्षताया अभावान्नानुमिति-रिति भावः। ननु परामर्शरूपानुमितिकारणसत्त्वे सिद्धिरूपानुमितिविरोधिसत्त्वे यद्यनु-मित्सा वर्त्तेत, तदा तस्या उत्तेजकत्वं स्यात्, प्रतिबन्धक-समानकालीन-कार्यजनकस्यो-त्तेजकत्वात्। न चैतत् सम्भवति, सिषाधयिषाकालेऽनुमितिकारणस्य परामर्शस्य क्षणिक-त्वेन नाशात्। तथा च परामर्शाभावादेवानुमितेरनुत्पत्त्या सिषाधयिषा नोत्तेजिका, प्रति-

সিষাধয়িষা থাকিলে বা না থাকিলেও পক্ষতা থাকে। [ কারণ সিদ্ধির অভাবকালে. সিষাধয়িষা থাকিলেও সিষাধয়িষাবিরহবিশিষ্ট সিদ্ধি না থাকায় সিষাধয়িষার অভাব-বিশিষ্ট সিদ্ধির অভাবই থাকে। সিষাধয়িষা না থাকিলে সিষাধয়িষার অভাববিশিষ্ট সিদ্ধির অভাবই থাকে।] যেখানে সিষাধয়িষা আছে, সেখানে সিদ্ধি থাকিলে বা না থাকিলেও পক্ষতা থাকে। [কারণ সিষাধয়িষাকালে সিদ্ধি থাকিলে সিষাধয়িষাবিশিষ্ট সিদ্ধি থাকে, সিষাধয়িষার অভাববিশিষ্ট সিদ্ধি না থাকায় সিষাধয়িষার অভাববিশিষ্ট সিদ্ধির অভাবও থাকে। সিষাধয়িষা কালে সিদ্ধি না থাকিলে সিষাধয়িষাবিরহরূপ বিশেষণ এবং বিশেষ্য সিদ্ধি না থাকায় সিষাধয়িষাবিরহ বিশিষ্ট সিদ্ধির অভাবই থাকে।] যেখানে কিন্তু সিদ্ধি আছে, সিষাধয়িষা নাই, সেখানে পক্ষতা থাকে না। কারণ [ সেখানে ] সিষাধয়িষার অভাববিশিষ্ট সিদ্ধি আছে। [পূঃ] আচ্ছা, যেখানে পরামর্শের অব্যবহিত পরক্ষণে সিদ্ধি, তাহার অব্যবহিত পরক্ষণে সিষাধয়িষা হয়,

**परामर्शनाशान्नानुमितिः। यत्र सिद्धि-परामर्श-सिषाधयिषाः क्रमेण भवन्ति, तत्र सिषाधयिषाकाले सिद्धेर्नाशात् प्रतिबन्धकाभावादेवानुमितिः। यत्र सिषाधयिषा-सिद्धि-परामर्शास्तत्र परामर्शकाले सिषाधयिषैव नास्ति। एवमन्यत्रापि। सिद्धि-काले परामर्शकाले च न सिषाधयिषा, योग्यविभुविशेषगुणानां यौगपद्यनिषेधात्।**

बन्धकसत्त्वे कार्योत्पादार्थमेवोत्तेजकस्य कल्पनीयत्वादित्याशङ्कते—**ननु यत्रे**ति। **परा-मर्शा**नन्तरं—परामर्शद्वितीयक्षणे। **ततः**—सिद्ध्युत्पत्ति-द्वितीयक्षणे। **क्रमेण**—अव्यव-धानेन। **सिषाधयिषै**व नास्तीति। धर्मिणोऽसत्त्वेन कस्योत्तेजकत्वं कल्पनीयमिति भावः। **एवमन्यत्रा**पीति। यत्र क्रमेण सिषाधयिषा-परामर्श-सिद्धयः सिद्धि-सिषाधयिषा-परामर्शाः परामर्श-सिषाधयिषा-सिद्धयो वा, तत्रापीत्यर्थः। तथा च यत्र सिषाधयिषा-परामर्श-सिद्धयः क्रमेण भवन्ति, तत्र सिद्धिकाले सिषाधयिषा-नाशात् सिषाधयिषा-विरहविशिष्टसिद्धिरूपस्य प्रतिबन्धकस्य सद्भावान्नानुमितिः। यत्र च सिद्धि-सिषाधयिषा-परामर्शास्तत्र परामर्शकाले सिद्धिनाशात् प्रतिबन्धकाभावादेवानुमितिः। यत्र च परामर्श-सिषाधयिषा-सिद्धयस्तत्र सिद्धिकाले परामर्शनाशात् कारणाभावादेव नानुमितिरिति सिषाधयिषा नोत्तेजिका। अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणं व्यर्थमिति भावः। ननु सिद्धिमात्रकाले परामर्शमात्रकाले वा सिषाधयिषा-सम्भवात् तत्रानुमितिर्न स्यात्, सिद्धिरूप-प्रतिबन्धकसद्भावादित्यत आह—**सिद्धिकाल** इति। **यौगपद्य-निषेधात्**—युगपदुत्पत्तिनिषेधात्। तथा च सिद्धि-परामर्शोभयक्षणे सिषाधयिषाया

সেস্থলে সিষাধয়িষাকালে [অনুমিতির অন্যতম কারণ] পরামর্শ বিনষ্ট হওয়ায় অনুমিতি হয় না। আর যেখানে সিদ্ধি, পরামর্শ ও সিষাধয়িষা ক্রমে (অব্যবধানে) হয়, সেখানে সিষাধয়িষাকালে সিদ্ধি বিনষ্ট হওয়ায় [সিদ্ধিরূপ অনুমিতির] প্রতিবন্ধক না থাকাতেই অনুমিতি হয়। আর যেখানে সিষাধয়িষা, সিদ্ধি, পরামর্শ ক্রমে হয়, সেখানে পরামর্শ কালে সিষাধয়িষাই থাকে না। এইরূপ অন্যত্রও অর্থাৎ যেখানে সিষাধয়িষা, পরামর্শ ও সিদ্ধি ক্রমে হয়, সেখানে সিদ্ধিকালে সিষাধয়িষারূপ উত্তেজক না থাকায় এবং প্রতি-বন্ধক সিদ্ধি থাকায় অনুমিতি হয় না। আর যেখানে সিদ্ধি, সিষাধয়িষা ও পরামর্শ ক্রমে হয়, সেখানে পরামর্শকালে সিদ্ধি না থাকায় অনুমিতি হয়। আর যেখানে পরামর্শ সিষাধয়িষা ও সিদ্ধি ক্রমে হয়, সেখানেও সিদ্ধিকালে পরামর্শ বিনষ্ট হওয়ায় অনুমিতি হয় না। সিদ্ধিকালে বা পরামর্শ কালে তো সিষাধয়িষাই হয় না। কারণ [প্রত্যক্ষ-]

**तत् कथं सिषाधयिषाविरहविशिष्टत्वं सिद्धेर्विशेषणमिति चेन्न। यत्र वह्निव्याप्य-धूमवान् पर्वतो वह्निमानिति प्रत्यक्षं स्मरणं वा, ततः सिषाधयिषा, तत्र पक्षता-सम्पत्तये तद्विशेषणस्यावश्यकत्वादिति। इदन्तु बोध्यं—यादृश-यादृश सिषा-धयिषा-सत्त्वे सिद्धिसत्त्वे यल्लिङ्गकानुमितिस्तादृश-तादृश-सिषाधयिषा-विरहविशिष्ट-सिद्ध्यभावस्तल्लिङ्गकानुमितौ पक्षता। तेन सिद्धि-परामर्शसत्त्वे यत्किञ्चिज् ज्ञानं**

उत्पत्त्यभावात् सिद्ध्युत्तरक्षणे परामर्शोत्तरक्षणे वा तदुत्पत्तिर्वाच्या। तथा च पूर्वोक्तं दूषणमिति भावः। **कथम्**—किमर्थम्, सिषाधयिषाकालीनानुमितिनिर्वाहरूप-प्रयोजना-सम्भवेन व्यर्थत्वादिति भावः। **प्रत्यक्षं**—अनुमितीष्टसाधनताविषयकं वह्निव्याप्यधूमवान् पर्वतो वह्निमान्, अनुमितिरिष्टसाधनमित्याकारकं समूहालम्बनात्मकं प्रत्यक्षम्। तथा च तादृश-प्रत्यक्षोत्पत्तेः स्मरणोत्पत्तेर्वा पूर्वमिष्टसाधनताधीस्वीकारे सर्वतो बलवत्या इच्छा-सामग्र्या प्रतिबन्धात् प्रत्यक्षमेव न स्यादतः समूहालम्बनसिद्ध्यात्मक-परामर्श एकक्षणे स्वीकृत इति भावः। **स्मरणं वेति**। सम्भवस्थलाभिप्रायकोऽयं विकल्पः। अयम्भावः—यत्र प्रथमक्षणे वह्निव्याप्यधूमवान् पर्वतो वह्निमान्, अनुमितिरिष्टसाधनमित्याकारकोऽनु-मितीष्टसाधनताविषयकः सिद्ध्यात्मकः परामर्शस्ततस्तदुत्तरक्षणे वह्न्यनुमितिर्जायतामित्या-कारिका सिषाधयिषा, तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टत्वं सिद्धौ विशेषणं देयमेव। अन्यथा सिद्धिरूप-प्रतिबन्धकसत्त्वेन तत्रानुमितिर्न स्यादिति। कीदृश्याः सिषाधयिषाया उत्तेजकत्वं, तदवधारयति—**इदं** त्विति। **यादृश-यादृशे**ति। वह्न्यनु-मित्सासत्त्वे वह्निनिश्चयसत्त्वेऽपि धूमादिलिङ्गक-वह्न्यनुमिति-दर्शनाद् धूमादिलिङ्गक-**वह्न्यनुमितौ** वह्न्यनुमित्सैवोत्तेजिका वाच्या, न तु घटाद्यनुमित्सेति वह्न्यनुमित्साविरह-

যোগ্য বিভুর গুণসমূহের যুগপৎ উৎপত্তি নাই। সুতরাং সিষাধয়িষাবিরহ বিশিষ্টত্বরূপ সিদ্ধির বিশেষণটী কি জন্য? অর্থাৎ সিষাধয়িষাকালে অনুমিতিনির্ব্বাহ-রূপ প্রয়োজন না থাকায় উহা ব্যর্থ—এই যদি [বল।] [উঃ] না—তাহা বলিতে পার না। কারণ যেখানে "বহ্নিব্যাপ্যধূমবান্ পর্ব্বতো বহ্নিমান্"—এই প্রত্যক্ষ (সিদ্ধিরূপ পরামর্শ) বা স্মরণ হয়। তাহার পর সিষাধয়িষা হয়, সেখানে পক্ষতানির্ব্বাহের জন্য সেই বিশেষণের আবশ্যকতা আছে। [এস্থলে] ইহা কিন্তু জ্ঞাতব্য :—যেরূপ যেরূপ সিষাধয়িষা থাকিলে সিদ্ধি থাকিলে যে হেতুর দ্বারা অনুমিতি হয়, সেই হেতুর দ্বারা অনুমিতিতে সেইরূপ সেইরূপ সিষাধয়িষার অভাববিশিষ্ট সিদ্ধির অভাবই পক্ষতা। সেই জন্য অর্থাৎ বিশেষ বিশেষ সিষাধয়িষা উত্তেজক হওয়ায়, সিদ্ধি ও পরামর্শ থাকা

जायतामितीच्छायामपि नानुमितिः। वह्निव्याप्य-धूमवान् पर्वतो वह्निमानिति प्रत्यक्षसत्त्वे प्रत्यक्षातिरिक्तं ज्ञानं जायतामितीच्छायान्तु भवत्येव। एवं धूमपरामर्शसत्त्वे आलोकेन वह्निमनुमिनुयामितीच्छायामपि नानुमितिः। सिषाधयिषा-

विशिष्ट-सिद्ध्यभाव एव धूमादिलिङ्गक-वह्न्यनुमितौ पक्षता। तथा च तत्तदनुमितौ तत्तद्-व्यक्तित्वेनैवेच्छाया उत्तेजकत्वं बोध्यम्। **तेन**—तत्तदिच्छाया उत्तेजकत्वेन। **नानुमितिः**—नानुमित्यापत्तिः, उत्तेजकाभावात्, यत्किञ्चिज्ज्ञानेच्छाया उत्तेजकत्वानभ्युपगमादिति भावः। नन्वनुमितित्वप्रकारकेच्छात्वेनैवोत्तेजकत्वं वाच्यम्, तेनैव यत्किञ्चिज्ज्ञानत्व-प्रकारकेच्छाया वारणसम्भवादत आह—**वह्निव्याप्ये**त्यादि। **प्रत्यक्षातिरिक्तं** ज्ञान-मित्यस्य शाब्दसामग्र्यसत्त्वे इत्यादिः। शाब्दसामग्रीसत्त्वे शाब्दबोधेनैवेच्छाविषयसिद्धि-सम्भवादनुमित्सा न स्यात्। तदभावे चोत्तेजकाभावेन तत्रानुमितेरप्यभावः, सिद्धिरूप-प्रतिबन्धक-सत्त्वात्। शाब्दसामग्र्यसत्त्वे तु तदानीं वह्नेः शाब्दबोधासम्भवेनानुमित्यैवे-च्छाविषयसिद्धिरिति शाब्दसामग्र्यसत्त्वे प्रत्यक्षातिरिक्तज्ञानस्याप्युत्तेजकतेति भावः। **भव**त्येवेत्यनुमितिरित्यनेन सम्बध्यते। तथा चात्रानुमितेरानुभविकतयाऽनुमितित्वाप्रकार-केच्छापि क्वचिदुत्तेजिका वाच्या, अनुमितित्वप्रकारकेच्छात्वेनोत्तेजकत्वे तत्रानुमितिर्न स्यात्, तदिच्छाया अभावादिति भावः। तल्लिङ्गकानुमिताविति तल्लिङ्गकत्वप्रवेशस्य फलमाह—**एवमित्या**दिना। **नानुमिति**रिति। पर्वतपक्षक-धूमलिङ्गक-वह्न्यनुमितौ सिद्धिसत्त्वे धूमेन वह्निमनुमिनुयामितीच्छाव्यक्तिरेवोत्तेजिका, आलोकेन वह्निमनुमिनुया-मितीच्छाव्यक्तिस्तु न तथा। तथा चात्र तत्तद्व्यक्तित्वेनेच्छाया उत्तेजकत्वात् सिद्धिसत्त्वे तदुत्तेजक-व्यक्तेरभावान्नानुमितिरिति भावः। सिद्ध्यनुमित्योः प्रतिबध्यप्रतिबन्धकभाव-स्वरूपं निरूपयति—**सिषाधयिषे**ति। सिषाधयिषाकाले पर्वतो वह्निमानिति सिद्धि-

কালে 'যৎকিঞ্চিৎ জ্ঞান উৎপন্ন হউক'—এই ইচ্ছা হইলেও অনুমিতি হয় না। [কারণ সেস্থলে যৎকিঞ্চিৎ জ্ঞানের ইচ্ছা উত্তেজক নহে।] 'বহ্নিব্যাপ্যধূমবান্ পর্ব্বতো বহ্নি-মান্'—এই প্রত্যক্ষ কালে [বহ্নির] 'প্রত্যক্ষাতিরিক্ত জ্ঞান হউক'—এই ইচ্ছা হইলেই কিন্তু অনুমিতি হইবেই। [কারণ এস্থলে এইরূপ ইচ্ছাই উত্তেজক। যেহেতু বহ্নির অনুমিতি জ্ঞান হইলেই পূর্ব্বোক্ত ইচ্ছা চরিতার্থ হইয়া থাকে।] এইরূপ ধূমপরামর্শ (বহ্নিব্যাপ্যধূমবান্ পর্ব্বতো বহ্নিমান্—এই জ্ঞান) থাকিলে 'আলোকেন বহ্নি-মনুমিনুয়াম্' (আলোকের দ্বারা বহ্নির অনুমান করি)—এই ইচ্ছা হইলেও অনুমিতি

**विरहकाले यादृशसिद्धिसत्त्वे नानुमितिस्तादृशी सिद्धिर्विशिष्यैव तत्तदनुमिति-प्रतिबन्धिका वक्तव्या। तेन पर्वतस्तेजस्वी, पाषाणमयो वह्निमानिति ज्ञानसत्त्वेऽप्यनुमितेर्न विरोधः। परन्तु पक्षतावच्छेदक-सामानाधिकरण्येन साध्यसिद्धावपि तदवच्छेदेनानुमितिदर्शनात् पक्षतावच्छेदकावच्छेदेनाऽनुमितिं प्रति पक्षतावच्छेद-**

सत्त्वेऽपि पर्वतो वह्निमानित्यनुमित्युत्पत्तेस्तादृशसिद्धिस्तादृशानुमितौ प्रतिबन्धिका न स्यादत उक्तं—**सिषाधयिषा**विरहकाल इति। **विशिष्यै**ति। सिषाधयिषाविरहकाले पर्वतो वह्निमानिति पर्वतविशेष्यक-वह्निप्रकारक-निश्चयसत्त्वे पर्वतो वह्निमानित्यनुमित्यनुत्पादात् पर्वतविशेष्यक-वह्निप्रकारकानुमितिं प्रति पर्वतविशेष्यक-वह्निप्रकारकनिश्चय एव प्रतिबन्धको नान्य इत्यर्थः। विशेषतः प्रतिबध्यप्रतिबन्धकभावनिरूपणप्रयोजनमाह—**तेने**ति। विशिष्य प्रतिबध्यप्रतिबन्धकभावनिरूपणेनेत्यर्थः। **न विरोध** इति। तथा च पर्वतस्तेजस्वीति ज्ञानस्य वह्नित्वावच्छिन्नप्रकारकत्वाभावात्, पाषाणमयो वह्निमानिति ज्ञानस्य पर्वतत्वावच्छिन्नविशेष्यकत्वाभावादिति भावः। पक्षतादीधितिमनुस्मरन् सिद्ध्यनुमित्योः प्रतिबध्य-प्रतिबन्धकभावे विशेषान्तरमाह—**परन्त्वि**ति। **पक्षतावच्छेदके**ति। पक्षतावच्छेदक-पर्वतत्वादि-धर्मेणाऽवच्छिन्नं पर्वतादिमात्रमविषयीकृत्य पक्षतावच्छेदकधर्मविशिष्टे चैकस्मिन्नेव पर्वतादौ साध्यसिद्धावपीत्यर्थः। **तदवच्छेदेन**—

হয় না। [কারণ ধূমলিঙ্গক অনুমিতিতে ধূমলিঙ্গক অনুমিতির ইচ্ছা উত্তেজক, আলোকলিঙ্গক অনুমিতির ইচ্ছা উত্তেজক নহে।] সিষাধয়িষার অভাবকালে যেরূপ সিদ্ধি থাকিলে অনুমিতি হয় না, বিশেষ করিয়া সেইরূপ সিদ্ধিকেই সেই সেই অনুমিতির প্রতিবন্ধক বলিতে হইবে অর্থাৎ সিষাধয়িষা না থাকিলে "পর্ব্বতো বহ্নিমান্" এইরূপ পর্ব্বত-বিশেষ্যক বহ্নি-বিশেষণক অনুমিতির প্রতি পর্ব্বত-বিশেষ্যক বহ্নিবিশেষণক 'পর্ব্বতো বহ্নিমান্'—এইরূপ সিদ্ধিই (নিশ্চয়ই) প্রতিবন্ধক, অন্যরূপ সিদ্ধি প্রতিবন্ধক নহে। সেই জন্য অর্থাৎ বিশেষভাবে এইরূপ প্রতিবধ্য-প্রতিবন্ধকভাব স্বীকৃত হওয়ায়, 'পর্ব্বতঃ তেজস্বী, পাষাণময়ো বহ্নিমান্'—এই জ্ঞান (সিদ্ধি) সত্ত্বেও [পর্ব্বতো বহ্নিমান্—এইরূপ] অনুমিতি হওয়ায় কোন বিরোধ নাই। [কারণ 'পর্ব্বতো বহ্নিমান্—এই অনুমিতির প্রতি পর্ব্বত-বিশেষ্যকতেজস্বিত্ববিশেষণক বা পাষাণময়-বিশেষ্যক বহ্নি-বিশেষণক সিদ্ধি বিরোধী নহে।] পরন্তু পক্ষতাবচ্ছেদকসামানাধিকরণ্যে অর্থাৎ পক্ষতাবচ্ছেদক পর্ব্বতত্বাদি ধর্ম্ম-বিশিষ্ট কোন এক পর্ব্বতে সাধ্য নিশ্চয় থাকিলেও পক্ষতাবচ্ছেদকাবচ্ছেদে অর্থাৎ পক্ষতাবচ্ছেদক পর্ব্বতত্বাদিধর্ম্ম বিশিষ্ট

**कावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका। पक्षतावच्छेदक-सामानाधिकरण्येनानुमितिं प्रति तु सिद्धिमात्रं विरोधि। इदन्तु बोध्यम्—यत्रायं पुरुषो न वेति संशयानन्तरं पुरुषत्वव्याप्य-करादिमानयमिति ज्ञानम्, तत्रासत्यामनुमित्सायां**

पक्षतावच्छेदकावच्छेदेन। पक्षतावच्छेदक-पर्वतत्वादिधर्मावच्छिन्न-पर्वतमात्रे इत्यर्थः। यत्र हि सिद्धिः पक्षतावच्छेदक-धर्मविशिष्टां काञ्चिदेकामेव व्यक्तिं विषयीकरोति, तत्र सा सामानाधिकरण्येन सिद्धिः। यत्र तु पक्षतावच्छेदकधर्मविशिष्टा यावती व्यक्तिः सिद्धेर्विषयः, तत्र साऽवच्छेदकावच्छेदेनेति बोध्यम्। **पक्षता**वच्छेदकावच्छेदेनानुमितिमिति। यत्रानुमितौ साध्ये पक्षतावच्छेदकव्यापकत्वं भासते, तत्रावच्छेदकावच्छेदेनानुमितिः। यत्र तु न व्यापकत्वभानं, तत्र सामानाधिकरण्येनेति व्यापकत्वभानाभानाभ्यामनयोर्भेदो मन्तव्यः। **साध्यसिद्धिरेवे**ति। एवकारेण सामानाधिकरण्येन सिद्धेर्व्यवच्छेदः। **सिद्धि**मात्रमिति। नव्यमते यद्धर्मविशिष्टे कचित् साध्यं सिद्धम्, तद्धर्मविशिष्टे व्यक्त्यन्तरेऽपि नानुमितिः। प्राचां मते तु यद्व्यक्तौ साध्यं सिद्धं, तत्र नानुमितिर्भवति, व्यक्त्यन्तरे तु भवत्येव, समानविशेष्यत्वसम्बन्धेन बाध-विशिष्टबुद्ध्योरिव सिद्ध्यनुमित्योः प्रतिबध्य-प्रतिबन्धकत्वौचित्यात्। तथा च प्राचां मते सामानाधिकरण्येनाऽनुमितिं प्रति सामानाधिकरण्येन सिद्धिर्न प्रतिबन्धिका, किन्त्ववच्छेदावच्छेदेन समानविशेष्यव्यक्तिकत्वेन वेति भावः। ननु संशयोत्तरं परामर्शात्मके विशेषदर्शने जातेऽनुमितिः कथं न जायते, प्रत्यक्षसामग्र्या इवाऽनुमिति-सामग्र्या अपि सत्त्वादित्याशङ्कायां यज्ञपतिमतं दूषयितुं प्रत्यक्षानुमितिसामग्र्योः प्रतिबध्यप्रतिबन्धकभावे स्वसिद्धान्तमाह—**इदन्त्वि**त्यादिना। **ज्ञानं**—परामर्शरूपं विशेषदर्शनम्। **असत्यामनुमित्साया**मिति।

পর্ব্বতাদি মাত্রে (যাবতীয় পর্ব্বতাদিতে) অনুমিতি হইতে দেখা যায় বলিয়া পক্ষতাবচ্ছেদকাবচ্ছেদে (পক্ষতাবচ্ছেদক ধর্ম্মবিশিষ্ট যাবতীয় পক্ষে—পর্ব্বতাদিতে) অনুমিতির প্রতি পক্ষতাবচ্ছেদকাবচ্ছেদে (পক্ষতাবচ্ছেদক ধর্ম্ম-বিশিষ্ট পক্ষমাত্রে) সাধ্যনিশ্চয় প্রতিবন্ধক, [পক্ষতাবচ্ছেদক সমানাধিকরণ্যে সাধ্যনিশ্চয় প্রতিবন্ধক নহে।] পক্ষতাবচ্ছেদক সামানাধিকরণ্যে (পক্ষতাবচ্ছেদক ধর্ম্মবিশিষ্ট কোন এক পক্ষে) অনুমিতির প্রতি কিন্তু সিদ্ধিমাত্র অর্থাৎ সামানাধিকরণ্যে সিদ্ধি এবং অবচ্ছেদাবচ্ছেদে সিদ্ধি—উভয় সিদ্ধিই প্রতিবন্ধক। [এস্থলে] ইহা কিন্তু জ্ঞাতব্য:—যেখানে 'অয়ং পুরুষো ন বা'—এই সংশয়ের অব্যবহিত পরক্ষণে 'পুরুষত্বব্যাপ্য কর-চরণাদিমান্ অয়ম্'—এই জ্ঞান (পরামর্শরূপ বিশেষ দর্শন) হয়, সেস্থলে অনুমিৎসা না হইলে পুরুষের প্রত্যক্ষ হয়,

**पुरुषस्य प्रत्यक्षं भवति, न त्वनुमितिः, 'अतोऽनुमित्साविरहविशिष्ट-समान-विषयक-प्रत्यक्षसामग्री कामिनीजिज्ञासादिवत् स्वातन्त्र्येण प्रतिबन्धिका। एवं परामर्शा-**

अनुमित्सासत्त्वे त्वनुमितिरेव भवति ; इच्छासामग्र्या सर्वतो बलवत्त्वादिति भावः। **प्रत्यक्षं** भवतीति। संशयोत्तरं प्रत्यक्षं प्रति हेतुभूतस्य विशेषदर्शनस्य सत्त्वात्। एतादृश-विशेषदर्शनरूप-प्रत्यक्षसामग्रीविशेषानुधावनञ्च प्रत्यक्षविषयेऽनुमितिसामग्री-प्रदर्शनार्थम्। पृथक् पृथक् सामग्रीप्रदर्शनस्यानुचितत्वादिति भावः। **कामिनी**-जिज्ञासावदिति। यथा कामिनीजिज्ञासा ग्राह्याभावाद्यनवगाहिन्यपि कामिनी-जिज्ञासात्वेन सकलकार्य-प्रतिबन्धिका, तथा तादृशप्रत्यक्षसामग्र्यपि ग्राह्याभावाद्यनवगाहिन्यपि तादृशसामग्रीत्वेन प्रतिबन्धिकेत्यर्थः। **स्वातन्त्र्येण**—पक्षताकुक्ष्यप्रविष्टत्वेन। **प्रतिबन्धिके**ति। तथा च समानविषयेऽनुमिति-सामग्र्यपेक्षया प्रत्यक्षसामग्र्या बलवत्त्वं बोध्यम्। अन्यथाऽनुमिति-सामग्र्याः प्रत्यक्षसामग्र्यपेक्षया बलवत्त्वे संशयोत्तरं प्रत्यक्षोच्छेदप्रसङ्गः। न चैवमनु-मित्युच्छेदप्रसङ्गः, अनुमेयोपनीतभानसामग्र्यास्तत्रापि सम्भवात्, तस्याश्च प्रत्यक्षसामग्री-त्वेन बलवत्त्वादिति वाच्यम्, उपनीतभानसामग्र्या इतरज्ञानसामग्र्यपेक्षया दुर्बलत्वात्। न चैवं संशयानन्तरं भ्रमरूपविशेषदर्शने सत्युपनीतभानसामग्रीजन्यं भ्रमप्रत्यक्षं न स्यात्, अनुमितिसामग्रीसत्त्वात्, तस्याश्चोपनीतभानसामग्र्यपेक्षया प्रबलत्वात्। न च दोषाघटितोपनीतप्रत्यक्षसामग्र्यपेक्षयाऽनुमित्यादि-सामग्री बलवतीति वाच्यम्। भ्रमानु-मित्युच्छेदापत्तेरिति चेत्। मैवम्, प्रत्यक्षमात्रप्रयोजकदोषाघटितोपनीतभानसामग्र्या अनुमित्यादिसामग्र्यपेक्षया दुर्बलत्वादिति। संशयोत्तरभ्रमे च प्रत्यक्षस्याऽनुभूयमानतया तन्मात्रघटितैव सामग्रीति नानुपपत्तिः। अत एव न भ्रमानुमित्युच्छेदोऽपि, तत्राऽनु-मितेरनुभूयमानतया तादृशोपनीतभानसामग्र्या दुर्बलत्वात्, दोषस्य फलबलकल्प्यत्वात्।

অনুমিতি হয় না। অতএব অনুমিৎসার অভাব-বিশিষ্ট সমানবিষয়ক প্রত্যক্ষ-সামগ্রী কামিনী-জিজ্ঞাসাদির ন্যায় স্বতন্ত্রই [ অনুমিতির ] প্রতিবন্ধক। এইরূপ—পরামর্শের

বিবৃতি

নৈয়ায়িক মতে আত্মাতে যুগপৎ দুইটী জ্ঞানের উৎপত্তি হয় না। কিন্তু যদি একই সময়ে প্রত্যক্ষের সামগ্রী ও অনুমিতির সামগ্রী উপস্থিত হয়, তবে কোন জ্ঞান হইবে? সমান বিষয়ে প্রত্যক্ষ সামগ্রী অনুমিতির সামগ্রী অপেক্ষা বলবান্ ; সুতরাং প্রত্যক্ষ জ্ঞান হইবে, অনুমিতি হইবে না। যদি সমান বিষয়েও অনুমিতির সামগ্রী প্রত্যক্ষ সামগ্রী অপেক্ষা বলবান্ হইত, তবে এইটি স্থাণু কি পুরুষ? এইরূপ

**नन्तरं विना प्रत्यक्षेच्छां पक्षादेः प्रत्यक्षानुत्पत्तेः प्रत्यक्षेच्छाविरहविशिष्टानुमिति-सामग्री भिन्नविषयक-प्रत्यक्षे प्रतिबन्धिकेति संक्षेपः ॥७०॥**

**वर्द्धमानो**पाध्यायास्तु सर्वत्रानुमितिसामग्र्याः प्रत्यक्षसामग्रीतो बलवत्त्वमाहुः। तथा चोक्तं **परिशुद्धि**-प्रकाशे—(११५ पृः) "व्याप्यत्वेन भाने तु परामर्शसद्भावादनुमितिरेव तत्र जायते, प्रत्यक्ष-सामग्रीतोऽनुमितिसामग्र्या बलवत्त्वात्, अन्यथा परामर्शानन्तरं धारावाहिकं परामर्शान्तरमेव स्यादि"ति। ननु समानविषयेऽनुमितिसामग्र्यपेक्षया प्रत्यक्षसामग्र्या बलवत्त्वे भिन्नविषयेऽपि प्रत्यक्षसामग्री बलवती स्यात्। तथा च घटादि-प्रत्यक्षसामग्रीकाले वह्न्याद्यनुमितिर्न स्यादत आह—**एवमिति**। तथा च भिन्नविषये प्रत्यक्ष-सामग्र्यपेक्षयानुमितिसामग्र्या बलवत्त्वं बोध्यम्। अन्यथा भिन्नविषयेऽपि प्रत्यक्षसामग्र्या बलवत्त्वे परामर्शोत्तरं परामर्शप्रत्यक्षप्रसङ्गः। इष्टापत्तिरिति चेत्। न। परामर्शप्रत्यक्षकाले व्याप्तिज्ञान-नाशात् तदुत्तरमनुमित्युच्छेदापत्तेरिति भावः ॥७०॥

পরক্ষণে পক্ষপ্রভৃতির প্রত্যক্ষেচ্ছা না হইলে পক্ষ প্রভৃতির প্রত্যক্ষ উৎপন্ন না হওয়ায় বিভিন্ন-বিষয়ক প্রত্যক্ষে প্রত্যক্ষেচ্ছার অভাববিশিষ্ট অনুমিতি-সামগ্রী (প্রত্যক্ষের) প্রতিবন্ধক—ইহাই সংক্ষেপ [কথা।] ॥৭০॥

**বিবৃতি**

সংশয়ের পরে পরামর্শরূপ বিশেষ দর্শন জন্য প্রত্যক্ষ হইত না। এস্থলে "পুরুষত্ব-ব্যাপ্যকরচরণাদিমান্ অয়ং"—এইরূপ বিশেষদর্শনটী সংশয়ের পরবর্তী প্রত্যক্ষের সামগ্রী। উহা পরামর্শ-স্বরূপ বলিয়া অনুমিতিরও সামগ্রী। একই পুরুষ বিষয়ে যুগপৎ দুইটী সামগ্রী উপস্থিত হইয়াছে। সমান বিষয়েও অনুমিতি সামগ্রী প্রবল হইলে সংশয়ের পরে "অয়ং পুরুষঃ" এইরূপ অনুমিতি হইবে, প্রত্যক্ষ হইবে না। অথচ সংশয়ের পরে বিশেষ-দর্শন জন্য প্রত্যক্ষই অনুভব সিদ্ধ। সুতরাং সংশয়োত্তর প্রত্যক্ষের অনুরোধে স্বীকার করিতে হইবে—অনুমিতির ইচ্ছা না থাকিলে সমান বিষয়ে প্রত্যক্ষ সামগ্রী প্রবল, অনুমিতির সামগ্রী দুর্বল। কিন্তু অনুমিতির ইচ্ছা থাকিলে অনুমিতির সামগ্রীই প্রবল হইবে; যেহেতু ইচ্ছার সামগ্রী সর্ব্বাপেক্ষা বলবতী। বিভিন্ন বিষয়ে যুগপৎ উপস্থিত প্রত্যক্ষ সামগ্রী ও অনুমিতি সামগ্রীর মধ্যে অনুমিতির সামগ্রী প্রবল, প্রত্যক্ষ সামগ্রী দুর্বল। ইহা স্বীকার না করিলে অনুমিতির উচ্ছেদ হইয়া যাইবে। অনুমিতিকালে যখন আত্মাতে আত্মমনঃ সংযোগ জন্য পরামর্শ উৎপন্ন হয়, তখন ঐ পরামর্শটী সাধ্য বিষয়ক অনুমিতির সামগ্রী; আত্মমনঃ-সংযোগটী পরামর্শ বিষয়ক প্রত্যক্ষের সামগ্রী। বিভিন্ন বিষয়ে (সাধ্য ও পরামর্শ বিষয়ে) এই দুইটী সামগ্রী

**अनैकान्तो विरुद्धश्चाप्यसिद्धः प्रतिपक्षितः ।**
**कालात्ययापदिष्टश्च हेत्वाभासाश्च पञ्चधा ॥७१॥**

हेतुप्रसङ्गाद् हेत्वाभासान् विभजते—**अनैकान्त** इत्यादि । तल्लक्षणन्तु यद्विषय-कत्वेन ज्ञानस्यानुमिति-विरोधित्वं तत्त्वम् । तथा हि—व्यभिचारादि-विषयकत्वेन

**हेतुप्रसङ्गा**दिति । स्मृतस्योपेक्षानर्हत्वं प्रसङ्गः । लक्षणस्य लक्ष्यासाधारण-धर्मात्मकस्य ज्ञानं विना विशेषे शिष्यजिज्ञासानुदयाद् विभागो निष्प्रयोजनक इत्यतो मणिकारोक्त-हेत्वाभाससामान्य-लक्षणमाह—**तल्लक्षण**मिति । हेतुदोषलक्षणमित्यर्थः । हेतुवदाभासन्त इति व्युत्पत्त्या हेत्वाभासपदं दुष्टहेतुपरम् । हेतोराभासा दोषा इति व्युत्पत्त्या च हेतुदोष-परम् । यद्यपि परममूले दुष्टहेतूनां विभागाद् दुष्टहेतोर्लक्षणं वक्तव्यम्, तथापि दोषज्ञाने जाते दुष्टलक्षणस्य ज्ञान-सम्भवाद् दोषाणामेव लक्षणं कृतमिति मन्तव्यम् । **यद्विषय-कत्वेने**ति । तृतीयार्थोऽवच्छिन्नत्वम् । तस्याऽनुमितिविरोधित्वेऽन्वयः । **ज्ञानस्ये**त्यत्र षष्ठ्यर्थो निष्ठत्वम् । **अनुमिति**विरोधित्वम्—अनुमिति-ततकरणान्यतर-प्रतिबन्धकत्वम् । तथा च ज्ञाननिष्ठ-यद्विषयकत्वावच्छिन्नानुमिति-तत्करणान्यतर-प्रतिबन्धकता, तद्-विषयत्वं हेत्वाभासत्वमित्यर्थः । लक्ष्ये लक्षणमुपपादयति—**तथा हीति** । **व्यभि-**

হেতুর প্রসঙ্গে হেত্বাভাসগুলিকে ( দুষ্ট হেতুগুলিকে ) **অনেকান্ত** ইত্যাদি গ্রন্থের দ্বারা বিভাগ করিতেছেন। হেত্বাভাসের ( হেতু-দোষের ) লক্ষণ কিন্তু—যদ্-বিষয়ক জ্ঞান অর্থাৎ যে ব্যভিচার, বিরোধ, অসিদ্ধি, বাধ প্রভৃতি বিষয়ের জ্ঞান অনুমিতির বিরোধী, সেই ( ব্যভিচারাদি ) বিষয়ই হেত্বাভাস ( হেতু-দোষ )। তাহা যেমন :—

**বিবৃতি**

যুগপৎ উপস্থিত হইয়াছে। এস্থলেও প্রত্যক্ষ সামগ্রী প্রবল হইলে পরামর্শের প্রত্যক্ষ হইবে এবং ঐ পরামর্শ প্রত্যক্ষকালে ব্যাপ্তিজ্ঞানের নাশও হইবে। কেননা জ্ঞান ক্ষণিক বলিয়া তৃতীয় ক্ষণে বিনষ্ট হয়। পরামর্শ প্রত্যক্ষকালে অনুমিতির হেতু ব্যাপ্তি-জ্ঞান বিনষ্ট হইলে পরামর্শ প্রত্যক্ষের পরে অনুমিতি হইবে না। কারণ তাহার হেতু ব্যাপ্তিজ্ঞান পূর্বে নাই। প্রত্যক্ষের সামগ্রী বলবান্ বলিয়া সর্বত্রই যদি পরামর্শের প্রত্যক্ষ হয়, তবে অনুমিতির উচ্ছেদ অবশ্যম্ভাবী। অথচ অনুমিতি অনুভবসিদ্ধ। সুতরাং অনুমিতির অনুরোধে স্বীকার করিতে হইবে—প্রত্যক্ষের ইচ্ছা না থাকিলে বিভিন্ন বিষয়ে অনুমিতি সামগ্রী প্রবল। এই অভিপ্রায়ে বিশ্বনাথ বলিলেন—**প্রত্যক্ষেচ্ছা-বিরহবিশিষ্টানুমিতি-সামগ্রী ভিন্ন-বিষয়ক-প্রত্যক্ষে প্রতিবন্ধিকা।**

### বিবৃতি

বাদীর সহিত বিচারে হেত্বাভাসের জ্ঞান একান্ত আবশ্যক। তাই হেতুর নিরূপণ প্রসঙ্গে হেত্বাভাসের নিরূপণ করিতেছেন। হেতুবদাভাসন্তে অর্থাৎ যাহা প্রকৃত হেতু নহে, কিন্তু হেতুর সাদৃশ্যবশতঃ হেতুর ন্যায় প্রতীত হয়—এইরূপ ব্যুৎপত্তি অনুসারে হেত্বাভাস শব্দে দুষ্ট হেতুকে বুঝায়। প্রাচীন মতে দুষ্ট হেতু শব্দের অর্থ—দোষ বিশিষ্ট হেতু। ঐ দুষ্ট হেতুই হেত্বাভাস। হেতুর দোষ পঞ্চবিধ বলিয়া হেত্বাভাসও পঞ্চবিধ। তাই কারিকায় এই দুই দুষ্ট হেতুর পঞ্চবিধ বিভাগ প্রদর্শিত হইয়াছে। কিন্তু দীধিতিকার রঘুনাথ শিরোমণি গঙ্গেশোপাধ্যায়ের অভিপ্রায়ানুসারে "হেতোরাভাসা দোষা হেত্বাভাসাঃ" এইরূপ ব্যুৎপত্তি অনুসারে হেতুর দোষকেই হেত্বাভাস বলিয়াছেন। হেতুর দোষ পঞ্চবিধ বলিয়া এই মতে হেত্বাভাসও পঞ্চবিধ। মুক্তাবলীকার গঙ্গেশোপাধ্যায়ের মত অনুবর্ত্তন করিয়া হেতুদোষের (হেত্বাভাসের) লক্ষণ নির্দেশ করিতে বলিলেন—**যদ্বিষয়কত্বেন জ্ঞানস্যানুমিতি-বিরোধিত্বং তত্ত্বম্।**

যে বিষয়ের জ্ঞান অনুমিতি বা অনুমিতির করণ (ব্যাপ্তিজ্ঞান বা পরামর্শের) বিরোধী, সেই বিষয়ই হেতুর দোষ বা হেত্বাভাস। ব্যভিচার, বিরোধ, অসিদ্ধি, সৎপ্রতিপক্ষ ও বাধ—এই পাঁচটী বিষয়ের জ্ঞান অনুমিতি বা অনুমিতি করণ (ব্যাপ্তি-জ্ঞান ও পরামর্শের) বিরোধী বলিয়া এই পাঁচটীই হেতুর দোষ বা হেত্বাভাস। যথা-ক্রমে এই পাঁচটী দোষের স্বরূপ প্রদর্শিত হইতেছে।

"সাধ্যাভাবাধিকরণ-বৃত্তির্হেতুঃ" অর্থাৎ এই হেতুটী সাধ্যাভাবের অধিকরণে বৃত্তি—এইরূপ নিশ্চয় হইলে "সাধ্যাভাবদবৃত্তিহের্তুঃ অর্থাৎ এই হেতুটী সাধ্যাভাবের অধিকরণে অবৃত্তি—এইরূপ জ্ঞান হয় না। কারণ তদ্‌বুদ্ধির প্রতি তাহার অভাব নিশ্চয় বা তাহার অভাবের ব্যাপ্য নিশ্চয় প্রতিবন্ধক। সাধ্যাভাবাধিকরণে বৃত্তি বিষয়ক নিশ্চয় তদভাব (অবৃত্তির অভাব-) বিষয়ক নিশ্চয় বলিয়া উহা সাধ্যাভাবাধিকরণে অবৃত্তি জ্ঞানের প্রতিবন্ধক। সুতরাং সাধ্যাভাবাধিকরণ-বৃত্তি হেতু বিষয়ের জ্ঞানটী অনুমিতির করণ সাধ্যাভাববদ্-অবৃত্তিত্বরূপ ব্যাপ্তিজ্ঞানের বিরোধী বলিয়া সাধ্যাভাবা-ধিকরণবৃত্তি হেতুটীই হইতেছে ব্যভিচার। যেমন—"পর্বতো ধূমবান্ বহ্নেঃ" এই অনু-মিতিস্থলে যদি কাহারও "ধূমাভাবদ্‌বৃত্তির্বহ্নিঃ" অর্থাৎ বহ্নিটী ধূমাভাবের অধিকরণ অয়োগোলকে বৃত্তি—এইরূপ জ্ঞান থাকে, তবে তাহার ধূমাভাববদবৃত্তির্বহ্নিঃ অর্থাৎ বহ্নিটী ধূমাভাবের অধিকরণ অয়োগোলকে অবৃত্তি—এইরূপ জ্ঞান হইবে না। এস্থলে ধূমাভাববদ্‌বৃত্তি বহ্নি বিষয়ের জ্ঞানটী ধূমাভাববদবৃত্তিত্বরূপ ব্যাপ্তি জ্ঞানের প্রতিবন্ধক হইল বলিয়া ধূমাভাববদ্‌বৃত্তি বহ্নিটীই ব্যভিচার। ঐ বহ্নিরূপ ব্যভিচার দোষটী

**বিবৃতি**

অনুমিতির হেতু বহ্নিতে তাদাত্ম্য সম্বন্ধে আছে বলিয়া বহ্নি হেতুটী ব্যভিচারী।

"সাধ্যাভাবব্যাপ্তো হেতুঃ" অর্থাৎ হেতুটী সাধ্যাভাবের ব্যাপ্তি বিশিষ্ট—এইরূপ জ্ঞান হইলে পক্ষে সাধ্যের অনুমিতি হয় না। কারণ তদ্বত্তা বুদ্ধির প্রতি তদভাব নিশ্চয় বা তদভাবের ব্যাপ্যবত্তা নিশ্চয় প্রতিবন্ধক। সাধ্যাভাবের জ্ঞান হইলে যেমন সাধ্যের জ্ঞান হয় না, তেমনি সাধ্যাভাবের ব্যাপ্যের জ্ঞান হইলেও সাধ্যের জ্ঞান হয় না। যেমন "ঘটো নিত্যঃ কার্য্যত্বাৎ" এই অনুমিতি স্থলে যদি কাহারও "নিত্যত্বাভাবব্যাপ্তং কার্য্যত্বং অর্থাৎ কার্য্যত্বটী নিত্যত্বাভাবের ব্যাপ্য—এই জ্ঞান থাকে, তবে তাহার ঘটে নিত্যত্বের জ্ঞান হয় না। এস্থলে নিত্যত্বাভাবের ব্যাপ্য কার্য্যত্ব বিষয়ের জ্ঞানটী ঘটে নিত্যত্বানুমিতির প্রতিবন্ধক হইল বলিয়া নিত্যত্বাভাব-ব্যাপ্য কার্য্যত্বটীই বিরোধ। ঐ বিরোধরূপ দোষটি নিত্যত্বানুমিতির হেতু কার্য্যত্বে তাদাত্ম্যসম্বন্ধ আছে বলিয়া কার্য্যত্ব হেতুটী বিরুদ্ধ।

"হেত্বভাববান্ পক্ষঃ" অর্থাৎ পক্ষটী হেত্বভাববান্—এইরূপ জ্ঞান হইলে "পক্ষটী হেতুমান্" এইরূপ জ্ঞান হয় না। কারণ হেত্বভাবের জ্ঞান হেতুজ্ঞানের বিরোধী। যেমন "হ্রদো বহ্নিমান্ ধূমাৎ" এই অনুমিতি স্থলে যদি কাহারও "ধূমাভাববান্ হ্রদ"—এইরূপ জ্ঞান থাকে, তবে তাহার "ধূমবান্ হ্রদ" এই জ্ঞান হয় না। হ্রদে ধূমবত্তার জ্ঞান না হইলে বহ্নিব্যাপ্য ধূমবত্তার জ্ঞান হইতে পারে না। যেখানে সামান্যতঃ ধূমই নাই, সেখানে বহ্নিব্যাপ্য ধূম থাকিতে পারে না। হ্রদে বহ্নি-ব্যাপ্য ধূমের জ্ঞান না হইলে পরামর্শের জ্ঞান হয় না। এস্থলে ধূমাভাববিশিষ্ট হ্রদ বিষয়ের জ্ঞানটী হ্রদে বহ্নিব্যাপ্য ধূমের জ্ঞানরূপ পরামর্শের প্রতিবন্ধক বলিয়া ধূমাভাববিশিষ্ট হ্রদই স্বরূপাসিদ্ধি। ধূমাভাববদ্ হ্রদরূপ স্বরূপাসিদ্ধি দোষটী একজ্ঞান-বিষয়ত্ব * সম্বন্ধে ধূম হেতুতে আছে বলিয়া এস্থলে ধূমহেতুটী স্বরূপাসিদ্ধ।

"সাধ্যাভাবব্যাপ্যবান্ পক্ষঃ" অর্থাৎ 'পক্ষটী সাধ্যাভাবব্যাপ্যবান্' এইরূপ নিশ্চয় হইলে 'পক্ষ সাধ্যবান্'—এই জ্ঞান হয় না। 'সাধ্যবান্'—এই বুদ্ধির প্রতি সাধ্যাভাবব্যাপ্যবত্তা নিশ্চয় প্রতিবন্ধক। যেমন 'হ্রদো বহ্নিমান্ ধূমাৎ' এই অনুমিতির পূর্বে যদি কাহারও "বহ্ন্যভাবব্যাপ্য-জলবান্ হ্রদঃ" অর্থাৎ হ্রদটী বহ্ন্যভাবের ব্যাপ্য জলবান্—এইরূপ নিশ্চয় থাকে, তবে তাহার "হ্রদো বহ্নিমান্"—এই জ্ঞান হয় না। কারণ বহ্ন্যভাবের ব্যাপ্যের নিশ্চয়টী 'বহ্নিমান্'—এই জ্ঞানের বিরোধী। এস্থলে বহ্ন্যভাবব্যাপ্যজলবদ্ হ্রদ বিষয়ক জ্ঞানটী 'হ্রদো বহ্নিমান্' এই অনুমিতির সাক্ষাৎ প্রতিবন্ধক হইল বলিয়া বহ্ন্যভাবব্যাপ্য জলবদ্ হ্রদটী সৎপ্রতিপক্ষ। ঐ বহ্ন্যভাব ব্যাপ্য জলবদ্

---

* হেত্বভাববান্ পক্ষো হেতুশ্চ—এইরূপ একটী জ্ঞান হইলে ঐ একজ্ঞানের বিষয় হয়—হেত্বভাব-বিশিষ্ট পক্ষ ও হেতু। ঐ একজ্ঞানের বিষয়তা হেত্বভাববিশিষ্ট পক্ষ ও হেতু—উভয়ে থাকে। ঐ একজ্ঞানের বিষয়তাটী এস্থলে সম্বন্ধ বলিয়া কল্পিত হইয়াছে। সুতরাং হেত্বভাববিশিষ্ট পক্ষটী ঐ একজ্ঞান বিষয়তা সম্বন্ধে হেতুতে থাকে। অন্যান্য উদাহরণ স্থলেও এইরূপ বুঝিতে হইবে।

**ज्ञानस्याऽनुमितिविरोधित्वात् ते दोषाः। यद्विषयकत्वञ्च यादृशविशिष्ट-विषयकत्वं**

**चारा**दिविषयकत्वेन ज्ञानस्य—ज्ञाननिष्ठ-व्यभिचारादि-विषयकत्वेन। आदिना विरोधासिद्ध्यादिपरिग्रहः। **ते**—व्यभिचारादयः। **दोषा** इति। तथा च पर्वतो धूमवान् वह्निमत्त्वादित्यनुमितौ करणस्य धूमाभाववदवृत्तिर्वह्निरिति व्याप्तिज्ञानस्य प्रतिबन्धको धूमाभाववद्वृत्तिर्वह्निरिति निश्चयः। तादृश-निश्चयनिष्ठा प्रतिबन्धकता धूमाभाववद्वृत्तिवह्निविषयकत्वावच्छिन्नेति धूमाभाववद्वृत्तिवह्निर्व्यभिचारः। एवं ह्रदो वह्निमानित्यनुमितौ वह्न्यभाववान् ह्रद इति बाधनिश्चयः प्रतिबन्धकः। तादृशनिश्चयनिष्ठा प्रतिबन्धकता वह्न्यभाववद्ह्रदविषयकत्वावच्छिन्नेति वह्न्यभाववद्ह्रदो बाध इति बाध-व्यभिचारयोर्लक्षण-समन्वयः। नन्वेवं पर्वतो वह्निमानित्यनुमितौ वह्न्यभाववान् पर्वत इति बाध-भ्रमः प्रतिबन्धकः। तादृशभ्रमनिष्ठा प्रतिबन्धकता वह्न्यभाववत्पर्वतविषयकत्वावच्छिन्नेति वह्न्यभाववत्पर्वतस्य दोषत्वे सद्धेतोर्धूमस्य दुष्टत्वप्रसङ्गः, अतः आह—**यद्विषयकत्व-**

[ অয়ং হেতুর্ব্যভিচারী—এইরূপ ] ব্যভিচার প্রভৃতি-বিষয়ক জ্ঞান অনুমিতির বিরোধী বলিয়া সেই ব্যভিচার, বিরোধ অসিদ্ধি, বাধ এবং সৎপ্রতিপক্ষ হইতেছে দোষ (হেত্বাভাস)। যদ্‌বিষয়কত্ব [ কথাটীর অর্থ ] হইতেছে—যাদৃশ-বিশিষ্ট-বিষয়কত্ব।

**বিবৃতি**

হ্রদরূপ দোষটী একজ্ঞান-বিষয়ত্ব সম্বন্ধে ধূম হেতুতে আছে বলিয়া ধূম হেতুটী সৎপ্রতিপক্ষিত। সৎহেতু কখনও সৎপ্রতিপক্ষিত হয় না। বাধিত হেতুও কখনও অসৎপ্রতিপক্ষিত হয় না অর্থাৎ বাধিত হেতু সকল সময়েই সৎপ্রতিপক্ষিত হইয়া থাকে।

"সাধ্যাভাববান্ পক্ষঃ অর্থাৎ 'পক্ষটি সাধ্যাভাবান্'—এই জ্ঞান হইলে 'পক্ষ সাধ্যবান্—এই জ্ঞান হয় না। কারণ সাধ্যবত্তা বুদ্ধির প্রতি সাধ্যাভাববত্তা নিয়শ্চয়টী প্রতিবন্ধক। যেমন "হ্রদো বহ্নিমান্ ধূমাৎ" এই অনুমান প্রয়োগের পূর্বে যদি কাহারও 'বহ্ন্যভাববান্ হ্রদ' এই জ্ঞান থাকে; তবে তাহার এইরূপ অনুমান প্রয়োগ হইতে 'হ্রদো বহ্নিমান্' এইরূপ অনুমিতি হইতে পারে না। কারণ হ্রদে বহ্নিমত্তা বুদ্ধির প্রতি হ্রদে বহ্ন্যভাববত্তা বুদ্ধিটী প্রতিবন্ধক। এস্থলে বহ্ন্যভাববদ্ হ্রদ-বিষয়ক জ্ঞানটী "হ্রদো বহ্নিমান্" এই অনুমিতির সাক্ষাৎ প্রতিবন্ধক হওয়ায় বহ্ন্যভাববদ্ হ্রদ্‌টী বাধ। বহ্ন্যভাববিশিষ্ট হ্রদরূপ ঐ বাধ দোষটী একজ্ঞান বিষয়ত্ব সম্বন্ধে ধূম হেতুতে আছে বলিয়া এস্থলে ধূম হেতুটী বাধিত। ঐ হেতুদোষের লক্ষণ সমন্বয় করিতে বলিলেন—

**ব্যভিচারাদিবিষয়কত্বেন জ্ঞানস্যানুমিতিবিরোধিত্বাৎ তে দোষাঃ।**

**बोध्यम्, तेन बाधभ्रमस्याऽनुमितिविरोधित्वेऽपि न क्षतिः। तत्र पर्वतो वह्न्यभाववानिति विशिष्टस्याप्रसिद्धत्वान्न हेतुदोषः। न च वह्न्यभावव्याप्य-पाषाणमयत्व-**

**ञ्चे**ति। यद्रूपावच्छिन्नविषयकत्वञ्चेत्यर्थः। **तेन**—यद्विषयकत्वस्यैतादृशार्थविवक्षणेन। **न क्षतिः**—वह्न्यभाववद्पर्वतादौ नातिव्याप्तिः। पर्वतो वह्निमानित्यनुमितौ वह्न्यभाववान् पर्वत इति बाधभ्रमस्याऽनुमितिप्रतिबन्धकत्वेऽपि तादृशप्रतिबन्धकता न वह्न्यभाववत्पर्वतत्वावच्छिन्नविषयकत्वावच्छिन्ना, वह्न्यभाववत्पर्वतस्याऽप्रसिद्धत्वादिति सद्धेतुमात्रे वह्न्यभाववत्पर्वतादेर्दोषत्वं हेतोर्दुष्टत्वञ्च नास्तीति भावः। **एवञ्च**—ज्ञाननिष्ठ-यद्रूपावच्छिन्नविषयकत्वावच्छिन्नानुमिति-तत्करणान्यतरप्रतिबन्धकत्वं, तद्रूपावच्छिन्नविषयत्वं हेत्वाभासत्वमिति लक्षणं फलितम्। सत्प्रतिपक्षस्यानित्यदोषत्ववादी शङ्कते—**न चे**ति।

তাহাতে অর্থাৎ যদ্-বিষয়কত্ব শব্দের যাদৃশবিশিষ্ট-বিষয়কত্ব অর্থ বিবক্ষিত হওয়ায়, [ পর্ব্বতে বহ্নির স্থিতি ও অনুমিতি কালে 'পর্ব্বতো বহ্ন্যভাববান্—এইরূপ ] বাধভ্রম অনুমিতির বিরোধী হইলেও ক্ষতি নাই অর্থাৎ বহ্ন্যভাববিশিষ্ট পর্বতরূপ বাধে হেত্বাভাসের লক্ষণ অতিব্যাপ্ত হয় না এবং হেতুটীও হেত্বাভাস হয় না। [ কারণ ] সে

**বিবৃতি**

কাহারও যদি 'বহ্ন্যভাববান্ পর্বত'—এইরূপ বাধভ্রম হয়, তবে তাহা 'বহ্নিমান্ পর্বত' এই অনুমিতির প্রতিবন্ধক হইয়া থাকে। বহ্ন্যভাববান্ পর্বত—এইরূপ জ্ঞান হইলে কাহারই 'বহ্নিমান্ পর্বত' এইরূপ জ্ঞান হয় না। এস্থলে বহ্ন্যভাববৎ পর্বত বিষয়ক জ্ঞানটী পর্বতে বহ্ন্যনুমিতির প্রতিবন্ধক হওয়ায় বহ্ন্যভাববৎ পর্বতটী দোষ হইয়া পড়ে। উহা হেতু-দোষ হইলে সদ্ধেতু ধূমটী দুষ্ট হেতু হইয়া যাইবে। কারণ একজ্ঞান বিষয়ত্ব সম্বন্ধে বহ্ন্যভাববৎ পর্বতরূপ দোষটী ধূমহেতুতে থাকে। অথচ এস্থলে ধূম হেতুটী দুষ্ট নহে। এজন্য—যাদৃশ বিশিষ্ট বিষয়ের জ্ঞান অনুমিতি বা অনুমিতিকরণের প্রতিবন্ধক, তাদৃশ বিশিষ্ট বিষয়ই হেতুর দোষ (হেত্বাভাস)—এইরূপ বলিতে হইবে। তাহা হইলে কোন ক্ষতি হইবে না। বহ্ন্যভাব-বিশিষ্ট পর্বত বিষয়ক বাধের ভ্রম পর্বতে বহ্ন্যনুমিতির প্রতিবন্ধক হইলেও বহ্ন্যভাববিশিষ্ট পর্বত প্রসিদ্ধ নহে বলিয়া উহা হেতুদোষ হয় না। যে পদার্থের অস্তিত্ব আছে, তাহা দোষ হইতে পারে; কিন্তু যে পদার্থের অস্তিত্বই নাই, তাহা কিরূপে দোষ হইবে? বহ্নিবিশিষ্ট পর্বত প্রসিদ্ধ হইলেও বহ্ন্যভাববিশিষ্ট পর্বত অনুমিতি কালে নাই। সুতরাং তাহা দোষ নহে। এই অভিপ্রায়ে বলিলেন—**যদ্বিষয়কত্বঞ্চ যাদৃশবিশিষ্ট-বিষয়কত্বং বোধ্যম্।**

**वान् पर्वत इति परामर्शकाले वह्निव्याप्यधूमस्याभासत्वं न स्यात् , तत्र वह्न्यभाव-व्याप्यवान् पक्ष इति विशिष्टस्याप्रसिद्धत्वादिति वाच्यम्। इष्टापत्तेः। अन्यथा बाधस्याऽनित्यदोषत्वापत्तेः। तस्मात् तत्र वह्न्यभावव्याप्य-पाषाणमयत्ववानिति परामर्शकाले वह्निव्याप्यधूमस्य नाभासत्वं, भ्रमादनुमितिप्रतिबन्धमात्रम् , हेतुस्तु न दुष्ट इति। इत्थञ्च साध्याभाववद्वृत्ति-हेत्वादिकं दोषः, तद्वत्त्वञ्च हेतौ येन**

वह्निव्याप्यधूमवान् पर्वत इति परामर्शकाले वह्न्यभावव्याप्य-पाषाणमयत्ववान् पर्वत इति परामर्शे सति धूमहेतोर्न सत्प्रतिपक्षत्वम्, पाषाणमयत्वे वह्न्यभावव्याप्यत्वाभावेन विशिष्टस्य वह्न्यभावव्याप्य-पाषाणमयत्ववत्-पर्वतस्याऽप्रसिद्धत्वादिति भावः। **इष्टापत्ते**रिति। सद्धेतूनां प्रतिपरामर्शेऽपि न दुष्टत्वमिति भावः। **अन्यथा**—प्रतिबन्धकीभूत-भ्रम-विषयस्यापि दोषत्वे। **अनित्य**दोषत्वापत्तेः—पक्षे साध्याभाव-भ्रमदशायां सद्धेतावपि दोषवत्त्वापत्तेः। **इत्थञ्च**—यादृश-विशिष्टविषयकत्वेन ज्ञानस्यानुमिति-प्रतिबन्धकत्वं; तादृश-विशिष्टस्य दोषत्वे च। **हेत्वादिक**मिति। आदिना साध्याभावविशिष्ट-पक्षपरिग्रहः। ननु साध्याभाववद्वृत्तिहेतोर्व्यभिचारत्वे तद्वत्त्वस्य हेतावभावाद् हेतौ दुष्टत्वव्यवहारो न स्यादत आह—**तद्वत्त्व**मिति। हेतौ तादृशदोषवत्त्वमित्यर्थः। तच्च व्यभिचारादि-

স্থলে বহ্ন্যভাববান্ পর্ব্বত—এই বিশিষ্ট অর্থাৎ বহ্ন্যভাববিশিষ্ট পর্ব্বত প্রসিদ্ধ না হওয়ায় উহা হেতুদোষ হয় না। [ বহ্নিব্যাপ্যধূমবান্ পর্ব্বতঃ—এই পরামর্শের অনন্তর ] বহ্ন্য-ভাবব্যাপ্যপাষাণময়ত্ববান্ পর্ব্বতঃ—এই পরামর্শকালে বহ্নিব্যাপ্য ধূম [সৎপ্রতিপক্ষিত] হেত্বাভাস না হউক। কারণ সেখানে 'বহ্ন্যভাবব্যাপ্যবান্ পক্ষঃ' এই বিশিষ্ট অর্থাৎ পাষাণময়ত্বে বহ্ন্যভাবব্যাপ্যত্ব না থাকায় বহ্ন্যভাবব্যাপ্য পাষাণময়ত্বটী প্রসিদ্ধ না হওয়ায় বহ্ন্যভাবব্যাপ্য পাষাণময়ত্ব-বিশিষ্ট পর্ব্বত প্রসিদ্ধ নহে—ইহা বলিতে পার না। কারণ এই আপত্তি ইষ্ট অর্থাৎ এস্থলে প্রকৃত সৎহেতু যে হেত্বাভাস নয়, তাহা আমারও স্বীকৃত। অন্যথা অর্থাৎ বিশিষ্ট বিষয়ের অপ্রসিদ্ধি অবস্থায় প্রতিবন্ধকীভূত ভ্রমজ্ঞানের বিষয়কে দোষ বলিয়া স্বীকার করিলে বাধে অনিত্যদোষত্বের আপত্তি হয় অর্থাৎ পক্ষে সাধ্যাভাবের ভ্রমকালে সৎহেতুতেও দোষবত্ত্বের আপত্তি হয়। অতএব সেস্থলে 'বহ্ন্যভাবব্যাপ্য-পাষাণময়ত্ববান্ পর্ব্বত'—এই ভ্রম পরামর্শ কালে বহ্নিব্যাপ্য ধূমের আভাসত্ব ( হেত্বাভাসত্ব ) নাই, ভ্রমবশতঃ অনুমিতির প্রতিরোধ হয় মাত্র। হেতু কিন্তু দুষ্ট নহে। এইরূপ হইলে অর্থাৎ যাদৃশ বিশিষ্ট-বিষয়ক জ্ঞান অনুমিতির বিরোধী, তাদৃশ বিশিষ্ট পদার্থ দোষ হইলে সাধ্যাভাববদ্‌বৃত্তি ( সাধ্যাভাবের অধিকরণে

**केनापि सम्बन्धेनेति नव्याः। परे तु यद्विषयकत्वेन ज्ञानस्यानुमितिविरोधित्वं, तद्वत्त्वं हेत्वाभासत्वम्। सत्प्रतिपक्षे विरोधिव्याप्त्यादिकमेव तथा। तद्वत्त्वञ्च हेतो-र्ज्ञानरूपसम्बन्धेन। न चैवं वह्निमान् धूमादित्यादौ पक्षे बाधभ्रमस्य साध्याभाव-**

स्थले तादात्म्यसम्बन्धेन। बाधादिस्थले तु वह्न्यभाववान् ह्रदो धूमश्चेत्याद्याकारकैकज्ञान-विषयत्वेन सम्बन्धेनेत्याह—**येन** केनापीति। **नव्याः**—दीधितिकृतः। प्राञ्चस्तु दुष्टाना-मेव हेतूनां विभजनात् तेषामेव लक्षणं वक्तव्यम्, तदुपयोगितयैव दोषस्वरूपनिर्वचनमिति वदन्ति, तन्मतमुपन्यस्यति—**परे** त्विति। **व्याप्त्या**दिकमेवेति। आदिना विरोधि-परामर्शपरिग्रहः। एवकारेण तादृशव्याप्तिविशिष्ट-हेतुविशिष्ट-पक्षस्याप्रसिद्धत्वेऽपि न क्षतिः। एकदेशस्यापि दोषत्वे बाधकाभावादित्यर्थो लभ्यते। **तथा**—दोषः। **तद्वत्त्वम्**—विरोधिव्याप्त्यादिमत्त्वम्। **ज्ञाने**ति। वह्न्यभावव्याप्तिमत्-पाषाणमयत्वं धूमश्चेत्या-द्याकारकैकज्ञानविषयत्वसम्बन्धेनेत्यर्थः। **बाधभ्रमस्य**—वह्न्यभाववान् पर्वत इत्याद्या-

বিদ্যমান) হেতু প্রভৃতিই দোষ হয়। যে কোনও সম্বন্ধে হেতুতে সেই দোষবত্ত্ব থাকে, অর্থাৎ ব্যভিচার স্থলে সাধ্যাভাববদ্-বৃত্তি হেতুরূপ দোষটী তাদাত্ম্য সম্বন্ধে হেতুতে থাকে, বাধ স্থলে সাধ্যাভাববিশিষ্ট পক্ষরূপ দোষটী 'সাধ্যাভাববান্ পক্ষো হেতুশ্চ—এইরূপ একজ্ঞানবিষয়ত্ব সম্বন্ধে হেতুতে থাকে। [তাহাতে হেতু দুষ্ট বলিয়া ব্যবহৃত হয়।]—ইহা নব্যগণ বলেন। প্রাচীনগণ বলেন—যদ্‌বিষয়ক অর্থাৎ যে দোষ বিষয়ক জ্ঞান অনুমিতির বিরোধী, তদ্‌বত্ত্বই (সেই দোষবত্ত্বই) হেত্বাভাসত্ব অর্থাৎ সেই দোষ যাহাতে থাকে, তাহাই হেত্বাভাস (দুষ্ট হেতু)। সৎপ্রতিপক্ষ স্থলে বিরোধী ব্যাপ্তি প্রভৃতিই সেই দোষ অর্থাৎ অনুমিতির বিরোধী দোষ। জ্ঞানরূপ সম্বন্ধে অর্থাৎ অয়ং সাধ্যাভাব-ব্যাপ্তিমান্ হেতুশ্চ—এইরূপ একজ্ঞানবিষয়ত্ব সম্বন্ধে হেতুতে সেই দোষবত্ত্ব থাকে। দোষবত্ত্বই হেত্বাভাসত্ব হইলে 'বহ্নিমান্ ধূমাৎ'

**বিবৃতি**

যদ্‌বিষয়ক অর্থাৎ যে দোষবিষয়ক জ্ঞান অনুমিতি বা অনুমিতি করণের বিরোধী, তদ্‌বিষয়বত্ত্ব অর্থাৎ সেই দোষবত্ত্বই হেত্বাভাসত্ব, ইহা প্রাচীন মত। অনুমিতি বিরোধী জ্ঞানের বিষয়টী দোষ হইলে এবং সেই দোষবিশিষ্ট হেতুটী হেত্বাভাস হইলে সৎহেতুও হেত্বাভাস হইয়া পড়িবে। দেখ, কাহারও যদি 'বহ্ন্যভাববান্ পর্বত"—এইরূপ ভ্রমাত্মক নিশ্চয় থাকে, তবে তাহার 'পর্বত বহ্নিমান্'—এইরূপ অনুমিতি হয় না। বহ্ন্যভাববান্ পর্বত—এইরূপ ভ্রমাত্মক নিশ্চয়ই অনুমিতির প্রতিবন্ধক। সুতরাং এস্থলে

**विषयकत्वेनानुमितिविरोधित्वाद् ज्ञानरूपसम्बन्धेन तद्वत्त्वस्यापि सत्त्वात् सद्धेतो-रपि बाधितत्वापत्तिरिति वाच्यम्। तत्र ज्ञानस्य सम्बन्धत्वाकल्पनात्। अत्र सत्-**

कारकस्य निश्चयस्य। **ज्ञानरूप**सम्बन्धेन—वह्न्यभाववान् पर्वतो धूमश्चेत्याद्याकारकैकज्ञान-विषयत्वसम्बन्धेन। **तद्वत्त्वस्य**—साध्याभाववत्त्वस्य। **तत्र**—बाधभ्रमकालीन-धूमादि-सद्धेतौ। **ज्ञानस्य**—एकज्ञानविषयत्वस्य। **सम्बन्धत्वे**ति। अयं हेतुर्बाधित इति व्यवहाराभावात्, तादृशव्यवहारस्यैव तादृशसम्बन्धकल्पनाबीजत्वादिति भावः। **अत्र**

প্রভৃতি স্থলে পক্ষে বাধভ্রমটী সাধ্যাভাব-বিষয়কত্ব-রূপে অনুমিতির বিরোধী হওয়ায় তদ্বত্ত্বটীও ( সাধ্যাভাববিশিষ্ট পক্ষটীও ) জ্ঞানরূপ সম্বন্ধে অর্থাৎ 'সাধ্যাভাববান্ পক্ষো হেতুশ্চ—এইরূপ একজ্ঞান-বিষয়ত্ব সম্বন্ধে সৎ ( নির্দোষ ) হেতুতে থাকায় সৎ হেতুরও বাধিতত্বের আপত্তি—ইহা বলিতে পার না। কারণ সে স্থলে ( বাধভ্রমকালীন ধূমাদি সৎহেতুতে ) জ্ঞানের ( একজ্ঞান-বিষয়ত্বের ) সম্বন্ধত্ব কল্পিত হয় না। এই স্থলে ( বিরুদ্ধ

**বিবৃতি**

অনুমিতি বিরোধী ভ্রমাত্মক নিশ্চয়ের বিষয় বহ্ন্যভাববিশিষ্ট পর্বতই দোষ হইতেছে। একজ্ঞান বিষয়ত্বে সম্বন্ধে উহা ধূম হেতুতে আছে। অতএব ধূম হেতুটী হেত্বাভাস হইয়া পড়ে। অথচ ধূম হেতুটী হেত্বাভাস নহে এবং হেত্বাভাস বলিয়া উহার ব্যবহারও নাই।

প্রাচীনগণ এইরূপ আপত্তির সমাধান করিতে বলেন—বহ্ন্যভাববিশিষ্ট পর্বতটী অনুমিতি বিরোধী জ্ঞানের বিষয় বলিয়া দোষ হইলেও ধূম হেতু দুষ্ট নহে। কারণ ধূম হেতুতে বহ্ন্যভাববিশিষ্ট পর্বতরূপ দোষটী নাই। একজ্ঞানবিষয়ত্ব সম্বন্ধে বহ্ন্য-ভাববিশিষ্ট পর্বতটী ধূমহেতুতে থাকিবে, ইহা বলা যায় না। কারণ যে স্থলে হেতুটী দুষ্ট বলিয়া প্রসিদ্ধ, মাত্র সেই স্থলে একজ্ঞানবিষয়ত্বটী সম্বন্ধ বলিয়া কল্পিত হয়, অন্যত্র হয় না। এস্থলে হেতুটী দুষ্ট বলিয়া প্রসিদ্ধ নহে। সুতরাং এস্থলে একজ্ঞান-বিষয়ত্বটী উহাদের সম্বন্ধ নহে—আর কোনও সম্বন্ধ নাই। অতএব বহ্ন্যভাববিশিষ্ট পর্বতরূপ দোষটী কোন সম্বন্ধেই ধূমহেতুতে নাই। এজন্য ধূমহেতুটী হেত্বাভাস নহে।

কিন্তু ধূম হেতু দ্বারা পর্বতে বহ্নির অনুমিতিকালে যদি কাহারও বহ্ন্যভাবব্যাপ্য পাষাণময়ত্ববান্ পর্বত—এইরূপ ভ্রমাত্মক বিরুদ্ধ পরামর্শ হয়, তবে তাহার পর্বতে বহ্নির অনুমিতি হয় না।" কারণ বহ্নিজ্ঞানের প্রতি বহ্নির অভাবনিশ্চয় যেমন প্রতি বন্ধক, বহ্ন্যভাবের ব্যাপ্যের নিশ্চয়ও তেমনি প্রতিবন্ধক। এস্থলে বহ্ন্যভাবব্যাপ্য পাষাণময়ত্ববিশিষ্ট পর্বত-বিষয়ক জ্ঞান অনুমিতির বিরোধী হওয়ায় বহ্ন্যভাবব্যাপ্য

**प्रतिपक्षित इति व्यवहारेण तत्कल्पनात्, तत्र बाधित इति व्यवहाराभावादित्याहुः। अनुमितिविरोधित्वञ्चानुमिति-तत्करणान्यतर-विरोधित्वम्, तेन व्यभि-**

—प्रतिपरामर्शकालीन-धूमादि-सद्धेतौ। **तत्कल्पनात्**—ज्ञानस्य सम्बन्धत्वकल्पनात्। **तत्र**—बाधभ्रमकालीनसद्धेतौ। **व्यवहारा**भावादिति। प्रत्युतायं हेतुर्न बाधितः पुरुषस्तु भ्रान्त इत्येवं व्यवहारादिति भावः। यत्र सत्प्रतिपक्षस्तत्र बाध इति सत्प्रतिपक्षस्य बाधव्याप्यतया व्याप्यसत्प्रतिपक्षसत्त्वे व्यापकस्य बाधस्य सत्त्वावश्यम्भावात् सद्धेतोर्बाधितत्वमावश्यकम्। यदि तथा व्यवहाराभावात् तस्याबाधितत्वमुच्यते, तदा व्यापकस्य बाधस्याभावात् व्याप्यस्यापि सत्प्रतिपक्षस्याभाव इति हेतोः सत्प्रतिपक्षितत्वमपि नाङ्गीकर्त्तव्यम्, भ्रमादेव तादृशव्यवहारोपपत्तेरित्यस्वरस **आहु**रित्यनेन सूचितः। ननु वह्निमानित्यनुमितिं प्रति वह्न्यभाववानिति बाधबुद्धिरेव प्रतिबन्धिका, न तु व्यभिचारबुद्धिरिति व्यभिचारे हेत्वाभासलक्षणाव्याप्तिरत आह—**अनुमिति**तत्करणेति। तथा च

পরামর্শকালীন ধূমাদি সৎ হেতুতে) 'সৎপ্রতিপক্ষিত' এই ব্যবহার হওয়ায় জ্ঞানের সম্বন্ধত্ব কল্পিত হয়। সেস্থলে (বাধভ্রম-কালীন সৎহেতুতে) 'বাধিত'—এই ব্যবহার নাই। অনুমিতি-বিরোধিত্ব হইতেছে—অনুমিতি ও তাহার করণ—এই দুইটীর যে

**বিবৃতি**

পাষাণময়ত্ববিশিষ্ট পর্বতই দোষ। উহা একজ্ঞানবিষয়ত্ব সম্বন্ধে ধূমহেতুতে থাকিবে। কারণ এস্থলে ধূম হেতুতে সৎপ্রতিপক্ষের ব্যবহার আছে বলিয়া একজ্ঞানবিষয়ত্বটী উহাদের সম্বন্ধ বলিয়া কল্পিত হইয়াছে। প্রাচীনগণের এই অভিপ্রায় প্রকাশ করিতে বলিলেন—**তত্র বাধিত ইতি ব্যবহারাভাবাদিত্যাহুঃ।**

প্রাচীনগণের এইরূপ সিদ্ধান্ত সহজভাবে গ্রহণীয় নহে। উভয় স্থলে ভ্রমজ্ঞান বা দোষ সমান থাকিতেও যখন ব্যবহারের বৈষম্য ঘটিতেছে। তখন ঐ ব্যবহারের প্রতি বিশেষ কারণ বলিতে হইবে। কিন্তু এস্থলে সেইরূপ বিশেষ কারণ কেহ বলেন নাই—দেখাও যায় না। ভ্রমজ্ঞানের মধ্যেও কোন বিশেষ নাই, এজন্য উহাও বিষম ব্যবহারের হেতু হইতে পারে না। আরও কথা, বাধাদি দোষের ভ্রমজ্ঞানস্থলে হেতুটী যে দুষ্ট নহে, ইহা সকলেরই স্বীকার্য্য। কিন্তু প্রাচীনমতে সৎপ্রতিপক্ষ ভ্রমস্থলে একজ্ঞানবিষয়ত্বটী সম্বন্ধ বলিয়া কল্পিত হইয়াছে। একজ্ঞানবিষয়ত্বটী সম্বন্ধ হইলে সৎপ্রতিপক্ষরূপ দোষটী ঐ একজ্ঞানবিষয়ত্ব সম্বন্ধে হেতুতে অবশ্যই থাকিবে। তাহা হইলে হেতুটী অবশ্যই দুষ্ট হইবে। ভ্রমজ্ঞানবশতঃ হেতুটী দুষ্ট বলিয়া ব্যবহৃত

**चारिणि नाऽव्याप्तिः। दोषज्ञानञ्च यद्धेतुविषयकं तद्धेतुकानुमितौ प्रतिबन्धकम्, तेनैकहेतौ व्यभिचारज्ञाने हेत्वन्तरेणाऽनुमित्युत्पत्तेस्तदभावाद्यनवगाहित्वाच्च व्यभि-**

व्यभिचार-बुद्धेरनुमितिकरण-व्याप्तिज्ञानविरोधित्वात् तत्र लक्षणसमन्वय इति भावः। ननु पर्वतो वह्निमान् द्रव्यत्वादित्यनुमितौ वह्न्यभाववद्वृत्तिद्रव्यत्वरूप-व्यभिचारस्य दोषत्वे तेन दोषेण धूमोऽपि दुष्टः स्यादत आह—**दोषज्ञान**मिति। **अनुमित्युत्पत्ते-**रित्यस्य व्यभिचारज्ञानस्याऽनुमिति-विरोधित्वाभावेऽपि न क्षतिरित्यनेनाऽन्वयः। तदभावाद्यनवगाहित्वाच्च व्यभिचारज्ञानस्याऽनुमितिविरोधित्वाभावेऽपि न क्षतिरिति द्वितीयोऽन्वयः। तत्र प्रथमान्वयेऽनुमितिविरोधित्वाभावेऽपीत्यस्य धूमादिहेतुकानुमिति-तत्करणान्यतर-विरोधित्वाभावेऽपीत्यर्थः। **न क्षतिः**—न व्यभिचारेऽव्याप्तिः। द्रव्यत्व-हेतुकानुमितिकरण-व्याप्तिज्ञान-विरोधित्वेन लक्षणसमन्वयादिति भावः। ननु व्यभिचार-ज्ञानस्य साक्षादनुमितिप्रतिबन्धकत्वमस्तु, अनुमितिपदस्य लक्षणाकल्पनाभावेन लाघवादत आह—**तदभावे**ति। साध्याभावाद्यनवगाहित्वादित्यर्थः। आदिना साध्याभावव्याप्य-परिग्रहः। तथा च व्यभिचारबुद्धेः साध्याभावावगाहित्वाभावान्न साध्यानुमिति-प्रति-

কোনটীর বিরোধিত্ব। অনুমিতিবিরোধিত্বের এইরূপ অর্থ হওয়ায় ব্যভিচারী হেতুতে অব্যাপ্তি হয় না। অর্থাৎ ব্যভিচার জ্ঞান সাক্ষাৎ অনুমিতির বিরোধী না হওয়ায় 'যদ্-বিষয়কজ্ঞান অনুমিতির বিরোধী, সেই বিষয়টী হেত্বাভাস—এই লক্ষণ ব্যভিচারে সঙ্গত হয় না। যে হেতুবিষয়ক দোষের জ্ঞান হয়, সেই হেতু জন্য অনুমিতিতে [সেই] দোষজ্ঞানটী প্রতিবন্ধক, [অন্য হেতু-জন্য অনুমিতিতে তাহা প্রতিবন্ধক নহে।] তাহাতে এক হেতুতে ব্যভিচার জ্ঞান হইলে অন্য হেতুদ্বারা অনুমিতির উৎপত্তি হওয়ায় [উক্ত]

**বিবৃতি**

হইলেও প্রকৃতপক্ষে তাহা দুষ্ট নহে। যাহা সৎ, তাহা কোনরূপেই দুষ্ট হয় না।

নব্যগণের মতে এইরূপ আপত্তির কোন সম্ভাবনা নাই। তাঁহাদের মতে যাদৃশ-বিশিষ্ট বিষয়ের জ্ঞান অনুমিতির বিরোধী, তাদৃশ বিশিষ্ট বিষয়ই দোষ। ভ্রমস্থলে তাদৃশ বিশিষ্ট বিষয় অপ্রসিদ্ধ বলিয়া হেতুর কোন দোষ নাই। ভ্রমবশতঃ অনুমিতির প্রতিরোধ হইলেও এবং হেতু দুষ্ট বলিয়া ব্যবহৃত হইলেও প্রকৃত পক্ষে হেতু দুষ্ট নহে। হেতু দুষ্ট হইলে পরেও ঐ হেতুকে দুষ্ট বলিয়া স্মরণ হইত, তাহা কিন্তু হয় না। বাধাদি জ্ঞানকে ভ্রম বলিয়া বুঝিলে হেতুকে সৎ বলিয়া জানা যায়। প্রাচীন মতে এইরূপ অস্বরস প্রকাশ করিতে বিশ্বনাথ বলিলেন—**আহুঃ**।

**चारज्ञानस्याऽनुमितिविरोधित्वाभावेऽपि न क्षतिरिति संक्षेपः। यादृश-साध्य-पक्ष-हेतौ यावन्तो दोषाः, तावदन्यान्यत्वं तत्र हेत्वाभासत्वम्। पञ्चत्वकथनन्तु तत्-**

बन्धकत्वमतोऽनुमिति-पदस्याऽनुमिति-तत्करणान्यतर-परत्वं बोध्यम्। तस्मिन् द्वितीयान्वयेऽनुमितिविरोधित्वाभावेऽपीत्यस्य साक्षादनुमितिविरोधित्वाभावेऽपीत्यर्थः। **न क्षति**रिति। अनुमितिपदस्य नानुमिति-तत्करणान्यतर-परत्वानुपपत्तिरित्यर्थः। ननु निर्वह्नि-पर्वतो वह्निमान् धूमादित्यादौ न कोऽपि हेत्वाभासः स्यात्, वह्न्यभावविशिष्ट-पर्वत-विशेष्यक-वह्निप्रकारक-ज्ञानस्याहार्यत्वेन तन्निष्ठप्रतिबध्यतानिरूपित-प्रतिबन्धकत्वस्य कुत्राप्यसंत्त्वादित्याशङ्कायां दीधितिकाराभिमतनुमित्यघटितं हेत्वाभास-सामान्यलक्षणमाह—**यादृशे**ति। तद्धर्मावच्छिन्न-साध्य-पक्ष-हेतुकत्रनुमितित्वेन किमुद्दिश्य न्यायप्रयोगे यद्-यद्धर्मावच्छिन्ने दोषव्यवहारः सम्प्रदायसिद्धस्तावदन्यान्यत्वं तत्रत्यदोषसामान्यलक्षणमित्यर्थः। नन्वेतादृशदोषसामान्यलक्षणस्य पञ्चधा विभागोऽसङ्गतः, धूमवान् वह्निमत्त्वादित्यादौ दोषपञ्चकाभावादित्यत आह—**तत्सम्भवे**ति। वायुर्गन्धवान् स्नेहादित्यत्र पञ्चहेत्वाभास-सम्भवः। तथा हि—गन्धाभाववति जले स्नेहहेतोः सत्त्वाद् व्यभिचारः, गन्धवत्यां पृथिव्यामसत्त्वाद् विरोधः, वायौ पक्षीभूतेऽसत्त्वादसिद्धिः, वायुर्गन्धाभाववान् अपृथिवीत्वादिति सत्प्रतिपक्षः, पक्षे साध्याभावसत्त्वाद् बाधश्च। एवं वायुः रूपवान् स्पर्शवदन्यत्वादित्यादावपि पञ्चैव हेत्वाभासा बोद्धव्याः। ते च हेत्वाभासाः पञ्चानां हेतुरूपाणां केनचिद् रूपेण रहिताः कैश्चिद् रूपैरन्विताश्चेति प्राञ्चः। तथा चोक्तं **तार्किक**-

ব্যভিচার জ্ঞান [ অন্য হেতু জন্য ] অনুমিতি বা তাহার করণের বিরোধী না হইলেও কোন ক্ষতি নাই অর্থাৎ ব্যভিচারে অব্যাপ্তি হয় না। কারণ যে হেতুতে ব্যভিচার জ্ঞান, সেই হেতুজন্য অনুমিতির প্রতি তাহা বিরোধী হওয়ায় লক্ষণ সঙ্গত হয়। ] আর ব্যভিচার জ্ঞানটী সাধ্যাভাব-বিষয়ক না হওয়ায় অনুমিতির সাক্ষাৎ বিরোধী না হইলেও কোন ক্ষতি নাই অর্থাৎ অনুমিতি পদের অনুমিতি ও তাহার করণ এতদন্যতরের—এইরূপ অর্থ বিবক্ষা করিলে কোন অনুপপত্তি নাই। [কারণ ব্যভিচার জ্ঞানটী ব্যাপ্তি জ্ঞান রোধ দ্বারা পরম্পরায় অনুমিতির বিরোধী হয়।] ইহাই সংক্ষেপ [কথা]। [ দীধিতিকারের মতে হেত্বাভাসের সামান্য লক্ষণ হইতেছে—] যৎপক্ষক যৎসাধ্যক হেতুতে যতটী দোষ, তদন্যতমত্বই হেত্বাভাসত্ব অর্থাৎ যাদৃশ পক্ষে যাদৃশ সাধ্যের যে হেতুতে যতটী দোষ হয়, সেস্থলে ততটী দোষই ভিন্ন ভিন্ন হেত্বাভাস। পঞ্চ হেত্বাভাস স্থলাভিপ্রায়েই অর্থাৎ যে স্থলে পাঁচটী হেত্বাভাস সম্ভব হয়, সেই স্থল লক্ষ্য করিয়াই

**सम्भवस्थलाभिप्रायेण। एवं च साधारणाद्यन्यतमत्वमनैकान्तिकत्वम् ॥७१॥**

**रक्षायाम्**—"हेतोः केनापि रूपेण रहिताः कैश्चिदन्विताः। हेत्वाभासाः पञ्चधा ते गौतमेन प्रपञ्चिताः"॥ इति। तानि च हेतु-रूपाणि पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमबाधितविषयत्वमसत्प्रतिपक्षत्वञ्चेति। तत्र विपक्षासत्त्वाभावादनैकान्तिकः सपक्षसत्त्वाभावाद् विरुद्धः पक्षसत्त्वाभावादसिद्धोऽसत्प्रतिपक्षत्वाभावात सत्प्रतिपक्षोऽबाधितविषयत्वाभावात् कालात्ययापदिष्टश्चेति पञ्च हेत्वाभासाः। **काश्यप**मते तु हेत्वाभासास्त्रिधा—असिद्धो विरुद्धः सन्दिग्धश्चेति। तथा चोक्तं भाष्ये—विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीदिति। अनध्यवसितो नामातिरिक्तश्चतुर्थो हेत्वाभास इति **प्रशस्त**पादाचार्याः। तथा चोक्तम्—एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवतीति। **लीलावती**कारा अप्येवमेवाहुस्तदाभासाश्चत्वार इति। **शिवादित्य**मिश्रास्त्वाहुः—तदाभासा असिद्धविरुद्धानैकान्तिकानध्यवसित कालात्ययापदिष्ट-प्रकरणसमा इति। हेत्वाभासास्त्रिधेति **दिङ्नागा**चार्याः **कीर्ति**पादाश्च। तथा चोक्तं **न्यायविन्दौ**—असिद्धविरुद्धानैकान्तिकास्त्रयो हेत्वाभासा इति। **गौतमीया**स्तु पञ्चधा। तत्र मूले वक्ष्यमाणेष्वनैकान्तिकादिलक्षणेषु क्वचिद् दोषमवधार्य नव्यमतमनुस्मरन् स्वयमनैकान्तिकादीनां लक्षणान्याह—**एवमि**ति। **साधारण**ादीत्यादिनाऽसाधारणानुपसंहारिणोः परिग्रहः ॥७१॥

[ হেত্বাভাসের ] পঞ্চত্ব সঙ্খ্যা কথিত হইয়াছে। এইরূপ [ অনৈকান্তিকত্বের লক্ষণ হইতেছে— ] সাধারণাদির অন্যতমত্বই অনৈকান্তিকত্ব অর্থাৎ সাধারণ, অসাধারণ ও অনুপসংহারী—এই তিনটীর অন্যতম হইতেছে অনৈকান্তিক (ব্যভিচার) হেত্বাভাস ॥৭১

## টিপ্পনী

হেতুবদাভাসন্তে অর্থাৎ যে সমস্ত পদার্থ প্রকৃত হেতু নহে, কিন্তু হেতুর সাদৃশ্যবশতঃ হেতুর ন্যায় প্রতীত হয়—এই ব্যুৎপত্তি অনুসারে হেত্বাভাসশব্দে দুষ্ট হেতুসমূহই বুঝায়। দুষ্ট হেতুতে প্রকৃত হেতুর যে রূপটী ( ধর্ম্মটী ) থাকে, তাহাই প্রকৃত হেতুর সাদৃশ্য। প্রাচীন মতে দুষ্ট হেতুতে প্রকৃত হেতুর কোন রূপ না থাকিলে তাহা হেত্বাভাস নহে। যে পদার্থ প্রকৃত হেতুর কোন ধর্ম্মশূন্য হইয়া কোন ধর্ম্ম-বিশিষ্ট হয়, তাহাই দুষ্ট হেতু বা হেত্বাভাস। তাই বরদরাজ **তার্কিকরক্ষায়** বলিয়াছেন—"হেতোঃ কেনাপি রূপেণ রহিতাঃ কৈশ্চিদন্বিতাঃ। হেত্বাভাসাঃ পঞ্চধা তে গৌতমেন প্রপঞ্চিতাঃ॥"

প্রকৃত হেতুর সেই রূপ বা লক্ষণ হইতেছে পাঁচটী—(১) পক্ষসত্ত্ব, (২) সপক্ষ-

**টিপ্পনী**

সত্ত্ব, (৩) বিপক্ষাসত্ত্ব, (৪) অসৎপ্রতিপক্ষত্ব ও (৫) অবাধিতত্ব। যে স্থলে সপক্ষ নাই, সেস্থলে সপক্ষসত্ত্বকে ত্যাগ করিয়া এবং যে স্থলে বিপক্ষ নাই, সেই স্থলে বিপক্ষাসত্ত্বকে ত্যাগ করিয়া অন্য চারিটী হেতুর লক্ষণ হইবে। সে স্থলে চতুর্লক্ষণ-বিশিষ্ট পদার্থই গমক লিঙ্গ বা প্রকৃত হেতু। অন্যত্র কিন্তু পঞ্চরূপ-বিশিষ্ট * পদার্থই গমক হেতু। যাহাতে পাঁচটী রূপ নাই, তাহা লিঙ্গাভাস বা হেত্বাভাস। যে পদার্থে সাধ্য ধর্ম্মের অনুমিতি হয়, তাহার নাম পক্ষ। পক্ষে হেতুর বিদ্যমানত্বই হেতুর পক্ষসত্ত্ব। যে পদার্থে হেতুর সাধ্যটী পূর্ব্বেই নিশ্চিত, তাহার নাম সপক্ষ। সপক্ষে হেতুর বিদ্যমানত্বই হেতুর সপক্ষসত্ত্ব। যে পদার্থে সাধ্যের অভাব পূর্ব্বেই নিশ্চিত, তাহার নাম বিপক্ষ। বিপক্ষে হেতুর অবিদ্যমানত্বই হেতুর বিপক্ষাসত্ত্ব। যে হেতুর তুল্যবলবিরোধী অপর হেতুরূপ প্রতিপক্ষ নাই, সেই হেতুর ধর্ম্মই অসৎপ্রতিপক্ষত্ব। পক্ষে যে হেতুর সাধ্যের অভাব কোন বলবৎ প্রমাণের দ্বারা নিশ্চিত হয় নাই, সেই হেতু অবাধিত। তাহার ধর্ম্ম অবাধিতত্ব। এই পঞ্চবিধ হেতু-রূপের মধ্যে বিপক্ষাসত্ত্বের অভাবে (১) **অনৈকান্তিক**, সপক্ষসত্ত্বের অভাবে (২) **বিরুদ্ধ**, পক্ষসত্ত্বের অভাবে (৩) **অসিদ্ধ**, অসৎপ্রতিপক্ষত্বের অভাবে (৪) **সৎপ্রতিপক্ষ** এবং অবাধিতত্বের অভাবে (৫) কালাত্যয়াপদিষ্ট, কালাতীত বা **বাধ** নামক হেত্বাভাস হয়।

মহর্ষি কণাদ বৈশেষিক দর্শনে "অপ্রসিদ্ধোঽনপদেশোঽসন্ সন্দিগ্ধশ্চানপদেশঃ" (৩।১।১৫) এই সূত্রে অপ্রসিদ্ধ (বিরুদ্ধ), অসন্ (অসিদ্ধ) ও সন্দিগ্ধ (অনৈকান্তিক)—এই তিনটী হেত্বাভাস বলিয়াছেন। কিন্তু সুপ্রাচীন প্রশস্ত-পাদাচার্য্য হেত্বাভাস বিভাগ করিতে বলিয়াছেন—'এতেনাসিদ্ধ-বিরুদ্ধ-সন্দিগ্ধানধ্যবসিত-বচনানামনপদেশত্বমুক্তং ভবতি। তদনুসারে **ন্যায়লীলাবতী** গ্রন্থে বল্লভাচার্য্যও বলিয়াছেন—'তদাভাসাশ্চত্বারঃ" (৬০৬ পৃঃ)। কিন্তু ব্যোম-শিবাচার্য্য **ব্যোমবতী** বৃত্তিতে (চৌখাম্বাসং ৫৬৯ পৃঃ) গৌতমের ন্যায় পঞ্চবিধ হেত্বাভাসই সমর্থন করিয়াছেন। **সপ্তপদার্থী**তে শিবাদিত্য মিশ্র বলিয়াছেন—"তদাভাসা অসিদ্ধ-বিরুদ্ধানৈকান্তিকানধ্যবসিতকালাত্যয়াপদিষ্টপ্রকরণসমাঃ।" তাঁহার মতে হেত্বাভাস ছয়টী। বৌদ্ধাচার্য্য

---

* কণাদের মতে হেতুর রূপ তিনটী—পক্ষসত্ত্ব, সপক্ষসত্ত্ব ও বিপক্ষাসত্ত্ব। অসৎপ্রতিপক্ষত্ব ও অবাধিতত্ব লিঙ্গের লক্ষণ নহে। তাই প্রশস্তপাদ বলিয়াছেন—"যথোক্তাৎ ত্রিরূপাৎ লিঙ্গাৎ একেন ধর্ম্মেণ দ্বাভ্যাং বা বিপরীতম্, তদনুমেয়স্যাধিগমে লিঙ্গং ন ভবতি।" বৌদ্ধগণের মতেও হেতু ত্রিরূপ বা ত্রিলক্ষণ। তাই দিঙ্‌নাগ **ন্যায়প্রবেশে** বলিয়াছেন—"ত্রিরূপাল্লিঙ্গাৎ যদনুমেয়ে জ্ঞানং তদনুমানম্"। প্রসিদ্ধ মীমাংসাগ্রন্থ **মানমেয়োদয়ে** হেতুর পঞ্চ রূপ উক্ত হইলেও পঞ্চবিধ হেত্বাভাস উক্ত হয় নাই।

**आद्यः साधारणस्तु स्यात् स्यादसाधारणोऽपरः।**
**तथैवाऽनुपसंहारी त्रिधाऽनैकान्तिको भवेत्॥७२॥**

**साधारणः** साध्यवदन्यवृत्तिः। तेन च व्याप्तिज्ञान-प्रतिबन्धः क्रियते। **असाधारणः** साध्यासमानाधिकरणो हेतुः। तेन साध्यसामानाधिकरण्यग्रहः प्रतिबध्यते। अन्ये तु सपक्षावृत्तिरसाधारणः। सपक्षश्च निश्चितसाध्यवान्। इत्थञ्च शब्दोऽनित्यः शब्दत्वादित्यादौ यदा पक्षे साध्यनिश्चयस्तदा नासाधारण्यं, तत्र हेतोर्निश्चयादिति वदन्ति। अनुपसंहारी चात्यन्ताभावाप्रतियोगि-साध्य-

**व्याप्तिज्ञान**-प्रतिबन्ध इति। साध्यवदन्यावृत्तित्वरूप-व्याप्तिज्ञानप्रतिबन्ध इत्यर्थः। एतद्व्याप्तिज्ञानं प्रत्येव तादृशसाधारणज्ञानस्य ग्राह्याभावविषयकत्वेन प्रतिबन्धकत्वादिति भावः। **प्रतिबध्यत** इति। व्याप्तिघटकीभूत-साध्यसामानाधिकरण्यग्रहः प्रतिबध्यत इत्यर्थः। असाधारणस्यानित्यदोषत्ववादिनां प्राचीनानां मतमाह—**अन्ये** त्विति। **पक्षे** साध्यसन्देहदशायामेवासाधारणस्य हेत्वाभासता, न तु निश्चयदशायाम्, तदा पक्षस्यैव सपक्षत्वेन हेतोः सपक्षव्यावृत्तत्वाभावादित्यनित्यदोषत्वं तस्येत्याह—**इत्थ**मिति। असाधारण्य-घटक-सपक्षत्वस्य निश्चयघटितत्वे इत्यर्थः। **तत्र**—निश्चितसाध्यवति

সাধ্যবদন্যবৃত্তি হেতুই সাধারণ অর্থাৎ যে হেতু সাধ্যাধিকরণ ভিন্নে বর্ত্তমান, তাহাই সাধারণ হেতু। তাহা [ সাধ্যবদন্যাবৃত্তিত্বরূপ ] ব্যাপ্তিজ্ঞান প্রতিরুদ্ধ করে। সাধ্যের অসমানাধিকরণ হেতুই অসাধারণ ব্যভিচারী হেতু। তাহা দ্বারা সাধ্যের সামানাধিকরণ্যজ্ঞান প্রতিরুদ্ধ হয়। অন্যেরা কিন্তু বলেন—সপক্ষে অবৃত্তি হেতু হইতেছে অসাধারণ হেতু। নিশ্চিত সাধ্যের অধিকরণই সপক্ষ। এই হইলে অর্থাৎ অসাধারণ হেত্বাভাসের ঘটক সপক্ষটি নিশ্চয় ঘটিত হওয়ায় 'শব্দোঽনিত্যঃ শব্দত্বাৎ' প্রভৃতি স্থলে যখন পক্ষে সাধ্যনিশ্চয় হয়, তখন হেতুটি অসাধারণ নহে ; কারণ সে স্থলে অর্থাৎ নিশ্চিত সাধ্য-বিশিষ্ট পক্ষে হেতুর নিশ্চয় আছে। অত্যন্তাভাবের অপ্রতিযোগী-সাধ্যকাদি হেতুই

**টিপ্পনী**

ধর্ম্মকীর্ত্তি **ন্যায়-বিন্দু** গ্রন্থে কণাদের ন্যায় তিন প্রকার হেত্বাভাস বলিয়াছেন। দিঙ্নাগও **ন্যায়-প্রবেশে** তিন প্রকার হেত্বাভাস বলিয়াছেন। সাংখ্যকারিকার প্রাচীন টীকা **মাঠরবৃত্তিতে** চতুর্দ্দশ প্রকার হেত্বাভাসের উল্লেখ দেখা যায়। হেত্বাভাসের প্রকারভেদে এইরূপ নানামত থাকিলেও গৌতমমতে হেত্বাভাস পঞ্চবিধই।

वचनविरोधात्। इत्थञ्च तत्त्वज्ञानिनां झटिति कायव्यूहेन सकलकर्मणां भोगेन क्षय इति चेन्न। तत्र भोगस्य वेदबोधित-नाशकोपलक्षकत्वात्। कथमन्यथा प्रायश्चित्तादिना कर्मणां नाशः ? तदुक्तम्—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन", "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इति। ननु तत्त्वज्ञानिनस्तर्हि शरीरावस्थानं सुखदुःखादिकञ्च च न स्यात्, ज्ञानेन सर्वेषां कर्मणां नाशादिति चेन्न,प्रारब्धेतरकर्मणामेव नाशात्। तत्तच्छरीरभोगजनकं हि यत् कर्म, तत् प्रारब्धम्, तदभिप्रायमेव नाभुक्तमिति वचनमिति॥

**वचन**विरोधादिति। तेन वचनेनादृष्टनाशमात्रे भोगस्यैव हेतुत्वप्रतिपादनादिति भावः। **इत्थञ्च**—भोगस्यैव धर्मनाशकत्वे च। **कायव्यूहेन**—योगमहिम्नैकदाऽनेकशरीरस्वीकारेण। **उपलक्ष**कत्वात्—सूचकत्वात्। तत्र प्रमाणमाह—**कथमि**ति। **अन्यथा**—उपलक्षकत्वाभावे। **प्रायश्चित्ता**दिनेति। आदिना तीर्थस्नानादिपरिग्रहः। ज्ञानस्यादृष्टनाशकत्वे स्मृतिं श्रुतिञ्च प्रमाणयति—**तदुक्त**मिति। **तर्हि**—भोगस्येव तत्त्वज्ञानस्यापि धर्माधर्मनाशकत्वे। **नाशा**दिति। ज्ञानस्य सर्वकर्मनाशकत्वस्वीकारे नाभुक्तमित्यादिवचनविरोधापत्त्या स्मृतिवाक्यघटकसर्वशब्दस्य सर्वशुक्ला सरस्वतीत्यादाविव संकोचेन प्रारब्धेतरकर्मपरत्वादिति भावः। **शरीरभोगज**नकं—शरीरावच्छेदेन भोगजनकम्॥१६३-१६४॥

ক্ষীয়তে কর্ম্ম' এই বচনের সহিত বিরোধ হয়। এই হইলে অর্থাৎ ভোগই ধর্ম্মাধর্ম্মের নাশক হইলে তত্ত্বজ্ঞানী ব্যক্তিগণের ঝটিতি কায়ব্যূহের দ্বারা ভোগেই সকল কর্ম্মের ক্ষয় হয়—এই যদি বলি। না—তাহা বলিতে পার না। কারণ সেই বচনে ভোগ পদটী বেদ-বোধিত নাশকের সূচক অর্থাৎ বেদে যে সমস্ত কর্ম্মকে ধর্ম্মাধর্ম্মের নাশক বলিয়াছেন, ভোগ শব্দে সেই সকল কর্ম্মকে বুঝিতে হইবে। অন্যথা অর্থাৎ ইহা স্বীকার না করিলে প্রায়শ্চিত্তের দ্বারা কিরূপে কর্ম্ম সমূহের নাশ হয় ? জ্ঞানাগ্নিঃ এই গীতা-বাক্যে তাঁহাই উক্ত হইয়াছে। [ পূঃ ] আচ্ছা, তাহা হইলে তত্ত্বজ্ঞানিগণের শরীরের স্থিতি ও সুখ দুঃখাদি না হউক। কারণ জ্ঞানের দ্বারা সকল কর্ম্মেরই নাশ হইয়াছে—এই যদি বলি। [ উঃ ] না—তাহা বলিতে পার না। কারণ [ জ্ঞানের দ্বারা ] প্রারব্ধ কর্ম্ম ব্যতীত কর্ম্মসমূহেরই নাশ [ বিবক্ষিত ] হইয়াছে। সেই সেই শরীরে ভোগজনক যে কর্ম্ম, তাহা প্রারব্ধ কর্ম্ম। 'নাভুক্তং ক্ষীয়তে' এই বচন সেই অভিপ্রায়েই ( প্রারব্ধ কর্ম্মের অভিপ্রায়েই ) জানিবে।

শব্দ এই গ্রন্থ দ্বারা শব্দ নিরূপণ করিতেছেন। মতোবৃত্তিঃ কথার অর্থ—

**शब्दो ध्वनिश्च वर्णश्च मृदङ्गादिभवो ध्वनिः ॥१६४**
**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः ।**
**सर्वः शब्दो नभोवृत्तिः श्रोत्रोत्पन्नस्तु गृह्यते ॥१६५**
**वीचितरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता ।**
**कदम्बकोरक-न्यायादुत्पत्तिः कस्यचिन्मते ॥१६६**

शब्दं निरूपयति—शब्द इति। नभोवृत्तिराकाशसमवेतः। दूरस्थशब्दस्याग्रहणादाह—**श्रोत्रेति**। ननु मृदङ्गाद्यवच्छेदेनोत्पन्ने शब्दे श्रोत्रे कथमुत्पत्तिरत आह—**वीचीति**। आद्यशब्दस्य बहिर्दशदिगवच्छिन्नोऽन्यः शब्दस्तेनैव शब्देन जन्यते, तेन चापरस्तद्व्यापकः। एवं क्रमेण श्रोत्रोत्पन्नो गृह्यते इति। **कदम्बेति**। आद्यशब्दाद् दशदिक्षु दश शब्दा उत्पद्यन्ते। ततश्चान्ये दश शब्दा उत्पद्यन्त इति भावः। अस्मिन् मते कल्पनागौरवादुक्तं—**कस्यचिन्मत इति** ॥१६४-१६६

शब्दो द्रव्यं, सर्वगतो नित्यश्चेति भट्टमतं निराकुर्वन् शब्दस्य गुणत्वं व्यवस्थापयितुमाह मूले—**शब्द** इति। द्रव्यवैधर्म्यान्नायं शब्दो द्रव्यम्। द्रव्यवैधर्म्यञ्चैकद्रव्यसमवायिकत्वम्। न हि द्रव्यमेकद्रव्यसमवायिकारणकं भवति। तथा च **वैशेषिकसूत्रम्**—"एकद्रव्यत्वान्न द्रव्यमि"ति। तस्माच्छब्दो गुणः। ननु तथापि कथं गुणानां चतुर्विंशतित्वम्, अरुच्यालस्य-रौद्यादीनामधिकानां सत्त्वादिति चेत्। न। नेच्छामीत्यरुचिनिरूपणात्। नाप्यालस्यं, यत्नाभावे तच्छब्दव्यवहारात्। नापि रौद्यम्, आर्द्रताहीने शुष्कतावदस्निग्नसामानाधिकरण्येनानुभवात्। कामाभिलाषरागसङ्कल्पकार्पण्य-वैराग्यादय इच्छाविशेषा एवेति सिद्धं गुणानां चतुर्विंशतित्वम् ॥१६४-१६६॥

আকাশে সমবেত। দূরস্থ শব্দের প্রত্যক্ষ হয় না বলিয়া বলিলেন—**শ্রোত্রোৎপন্নঃ**। আচ্ছা, মৃদঙ্গাদি দেশে শব্দ উৎপন্ন হইলে (তাহা) শ্রোত্রে কিরূপে উৎপন্ন হয়—এই আশঙ্কায় বলিলেন—**বীচী** ইত্যাদি। সেই প্রথম শব্দের দ্বারা (আদ্য শব্দের) বাহিরে দশদিকে অন্য শব্দ উৎপন্ন হয়। তাহা দ্বারা তাহার অপেক্ষা ব্যাপক অন্য শব্দ উৎপন্ন হয়। এইরূপে [ শব্দ ] শ্রোত্রে উৎপন্ন হইলে প্রত্যক্ষ হয়। **কদম্ব গ্রন্থের এই তাৎপর্য্য :**—প্রথম শব্দ হইতে দশদিকে দশটী শব্দ উৎপন্ন হয়। সেই দশটী দ্বারা অন্য দশটী শব্দ উৎপন্ন হয়। এই মতে কল্পনার গৌরব হয়; এই জন্য উক্ত হইয়াছে—**কস্যচিন্মতে** ॥১৬৩-১৬৬॥

उत्पन्नः को विनष्टः क इति बुद्धेरनित्यता ।
सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते ॥१६७
तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात् ।
तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः ॥१६८

**इति महामहोपाध्याय-विद्यानिवास-भट्टाचार्यसूत-श्रीविश्वनाथ-न्यायपञ्चानन भट्टाचार्य-विरचितो भाषापरिच्छेदः समाप्तः**

ननु शब्दस्य नित्यत्वादुत्पत्तिकथनमसङ्गतमत आह—**उत्पन्नेति** । शब्दानामुत्पादविनाशप्रत्ययशालित्वादनित्यत्वमित्यर्थः । ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम् । इत्थं चोत्पादविनाशबुद्धिर्भ्रमरूपैवेत्यत आह—**सोऽयमिति** । **साजात्यमिति** । तत्र प्रत्यभिज्ञानस्य तत्सजातीयत्वं विषयो न तु तद्व्यक्त्यभेदो विषयः, उक्तप्रतीतिविरोधात् । इत्थञ्च द्वयोरपि बुद्ध्योर्न भ्रमत्वमिति ॥१६७

ननु सजातीये सोऽयमिति प्रत्यभिज्ञा कुत्र दृष्टा, इत्यत आह—**तदेवेति** ।

तत्त्वचिन्तामणेः शब्दानित्यतावादमनुस्मरन् शब्द-नित्यत्ववादिनो मीमांसकस्य मतं निराकर्त्तुमाह—**नन्विति** । **इत्थञ्च**—प्रत्यभिज्ञया शब्दनित्यत्वसिद्धौ च । **भ्रमरूपेति** । वर्णव्यञ्जकोत्पत्तेर्वर्णेष्वारोपादिति भावः । **उक्तप्रतीति**विरोधात्—उत्पादविनाशशालिप्रत्ययविरोधात् । न चैवं तज्जातीयोऽयमिति स्यात्, न तु सोऽयमिति वाच्यम् । तज-

শব্দের নিত্যত্বহেতু তাহার উৎপত্তির উক্তি সঙ্গত নহে—এই আশঙ্কায় বলিলেন **উৎপন্নেতি** । শব্দের উৎপাদ ও বিনাশ প্রত্যক্ষ-বেদ্য বলিয়া শব্দ অনিত্য—[ উক্ত গ্রন্থের ] এই অর্থ । ( পূঃ ) আচ্ছা, 'সেই এই ককার' এই সমস্ত প্রত্যভিজ্ঞা দ্বারা শব্দসমূহের নিত্যত্ব সিদ্ধ হয় । তাহা হইলে [ শব্দের ] উৎপাদ বিনাশবুদ্ধি ভ্রমরূপই [ বলিতে হইবে ]—এই আশঙ্কায় বলিলেন—**সোহয়মিতি** । **সাজাত্যম্** এই [ গ্রন্থ ব্যাখ্যাত হইতেছে ] । সেস্থলে প্রত্যভিজ্ঞাটীর বিষয় হইতেছে—তাহার সজাতীয়ত্ব, ব্যক্তির অভেদ কিন্তু বিষয় নহে । কারণ—উক্ত উৎপাদ বিনাশ প্রতীতির সহিত বিরোধ হয় । এই প্রকারে দুইটী প্রতীতিরই অভ্রান্তত্ব সিদ্ধ হয় ॥১৬৭॥

আচ্ছা, সজাতীয় পদার্থে 'সোহয়ং' এই প্রত্যভিজ্ঞা কোথায় দৃষ্ট হয় ? এই আশঙ্কায় বলিলেন—**তদেব** । "যে ঔষধ আমি প্রস্তুত করিয়াছি, সেই ঔষধ অন্য

यदौषधं मया कृतं, तदौषधमन्येनापि कृतमित्यादि-दर्शनादिति भावः ॥१६८

इति श्रीमन्महामहोपाध्याय-विद्यानिवासभट्टाचार्य-सुत-
श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितायां
सिद्धान्त-मुक्तावल्यां गुणनिरूपणम्

जातीयत्वप्रतीतेरपि सोऽयमित्याकारदर्शनात्। अधिकं तु शब्दानित्यत्ववादेऽनुसन्धेयम्।

वङ्गेषु दक्षिणे भागे मेदिनीपुर-मण्डले।
मालञ्च-ग्रामिक-श्रेष्ठः काश्यपान्वय-सम्भवः॥
शिरोमणिरिति ख्यातः श्रीनाथचन्द्र-भूसुरः।
जनको, जननी यस्य गङ्गा-देवी पतिव्रता॥
आचार्यौ यस्य च 'महामहोपाध्याय'लाञ्छनौ।
दर्शनाध्यापक-चरौ विश्वविद्यालयस्थितौ॥
फणिभूषण-योगेन्द्रौ गीष्पतिप्रतिमावुभौ।
पञ्चाननाभिधः सोऽहं कलिकाता-स्थलीस्थितः॥
आत्मज्ञानप्रकर्षाय यं समुद्यममाचरम्।
मुक्तावली-संग्रहोऽयं तेनैव पूर्णतां गतः॥
ग्रहषड्वसुचन्द्रांके शाकाब्दे शुचिसंक्रमे।
परमेशार्पितो मोदं विधत्तां स विपश्चिताम्॥
यदत्र सौष्ठवं किञ्चित् तद्गुरोरेव मे न हि।
यदत्रासौष्ठवं किञ्चित् तन्ममैव गुरोर्न हि॥

इति श्रीमन्महामहोपाध्याय-फणिभूषण-तर्कवागीश-श्रीचरणान्तेवासि-
श्रीमत्-पञ्चानन भट्टाचार्य-विरचितो
मुक्तावलीसंग्रहः समाप्तः

পুরুষ কর্তৃকও প্রস্তুত হইয়াছে"—এই সমস্ত প্রত্যভিজ্ঞা দেখা যায় বলিয়া [ পূর্ব্বোক্ত "সোঽয়ং" প্রত্যভিজ্ঞা সজাতীয় বস্তু বিষয়ক ]—[ উক্ত গ্রন্থের ]—এই তাৎপর্য ॥১৬৮॥

শ্রীপঞ্চানন ভট্টাচার্য্য কৃত সিদ্ধান্তমুক্তাবলীর
অনুবাদ সমাপ্ত।

# मुक्तावलीसंग्रह-धृत-ग्रन्थानामनुक्रमणिका

अद्वैतरत्नरक्षणम् (मधुसूदनसरस्वती)
अद्वैतसिद्धिः (मधुसूदनसरस्वती)
अमरकोषः (अमरसिंहः)
अवच्छेदकत्व-निरुक्ति-दीधितिः (रघुनाथशिरोमणिः)
आत्मतत्त्वविवेकः (उदयनाचार्यः)
आत्मतत्त्वविवेककल्पलता (शङ्करमिश्रः)
आत्मतत्त्वविवेकदीधितिः (रघुनाथः)
आत्मतत्त्वविवेकप्रकाशिका (भगीरथठक्कुरः)
आपस्तम्बभाष्यम् (हरदत्ताचार्यः)
आसत्तिवादरहस्यम् (मथुरानाथः)
कणादरहस्यम् (शङ्कर-मिश्रः)
कल्पतरुपरिमलम् (अप्पय-दीक्षितः)
काव्यप्रकाशः (मम्मट-भट्टः)
किरणागमः (शिवप्रोक्तः)
किरणावली (उदयनाचार्यः)
किरणावलीप्रकाशः (वर्द्धमानः)
कुसुमाञ्जलिः (उदयनाचार्यः)
कुसुमाञ्जलिप्रकाशः (वर्द्धमानः)
कूर्मपुराणम् (महर्षिवेदव्यासः)
खण्डनखण्डखाद्यम् (श्रीहर्षः)
गणकारिका (भासर्वज्ञः)
चित्सुखी (चित्सुखमुनिः)
छान्दोग्योपनिषद् (ईश्वरप्रोक्तः)
तात्पर्यटीका (वाचस्पतिमिश्रः)
तत्त्वचिन्तामणिः (गङ्गेशोपाध्यायः)
तर्कामृतम् (जगदीश-तर्कालङ्कारः)
तन्त्ररहस्यम् (रामानुजाचार्यः)
तत्त्वोपप्लवः (जयराशिः)
तत्त्वप्रकाशः (भोजराजः)
तात्पर्यपरिशुद्धिः (उदयनाचार्यः)
तात्पर्यपरिशुद्धिप्रकाशः (वर्द्धमानः)
तार्किकरक्षा (वरदराजः)
तैत्तिरीयोपनिषद् (ईश्वरप्रोक्ता)
दीनकरी (महादेव-भट्टः)
नयविवेकः (भवनाथ-मिश्रः)
न्यायकणिका (वाचस्पतिमिश्रः)
न्यायदर्शनम् (महर्षिगौतमः)
न्यायप्रवेशः (दिङ्नागः)
न्यायमञ्जरी (जयन्तभट्टः)
न्यायभाष्यम् (वात्स्यायनः)
न्यायभूषणम् (भासर्वज्ञः)
न्यायरहस्यम् (रामभद्र-सार्वभौमः)
न्यायवार्त्तिकम् (उद्द्योतकरः)
न्यायमकरन्दः (रुचिदत्तः)
न्यायबिन्दुः (धर्मकीर्त्तिः)
न्यायसारः (भासर्वज्ञः)
न्यायसिद्धान्तमञ्जरी (जानकीनाथः)
न्यायसूत्रवृत्तिः (विश्वनाथः)
पदार्थतत्त्वनिरूपणम् (रघुनाथः)
पदार्थतत्त्वनिरूपणटीका (रामभद्रः)
पदार्थदीपिका (कौण्डभट्टः)
पाणिनिसूत्रम् (महर्षिपाणिनिः)
पौष्करागमः (शिवप्रोक्तः)

प्रकरणपञ्चिका ( शालिकनाथः )
प्रशस्तपादभाष्यम् ( प्रशस्तदेवः )
प्रत्यभिज्ञाविमर्शिणी (अभिनवगुप्तः)
प्रमेयकमलमार्त्तण्डः (जैनप्रभाचन्द्रः)
प्रमाणवार्त्तिकम् ( धर्मकीर्तिः )
बालमनोरमा ( वासुदेवदीक्षितः )
भामती ( वाचस्पतिमिश्रः )
भावनाविवेकः ( मण्डनमिश्रः )
भगवद्गीता ( महर्षिवेदव्यासः )
मत्स्यपुराणम् ( महर्षिवेदव्यासः )
मनुभाष्यम् ( मेधातिथिः )
मनुसंहिता ( स्वायम्भुवमनुः )
महाभारतम् ( महर्षिवेदव्यासः )
महाभाष्यम् ( पतञ्जलिः )
माठरवृत्तिः ( माठराचार्यः )
मानमेयोदयः ( नारायणपण्डितः )
मानरत्नावली ( अज्ञातकर्त्तृकः )
मानमनोहरः ( वादिवागीश्वरः )
मानसोल्लासः ( सुरेश्वराचार्यः )
मीमांसादर्शनम् ( महर्षिजैमिनिः )
मीमांसामहार्णवः ( अज्ञातकर्त्तृकः )
मृगेन्द्रसंहिता ( शिवप्रोक्ता )
मोक्षधर्मः ( महर्षिवेदव्यासः )
याज्ञवल्क्य-संहिता (योगियाज्ञवल्क्यः)
युक्तिदीपिका ( अज्ञातकर्त्तृका )
रत्नटीका ( अज्ञातकर्त्तृका )
रामरुद्री ( रामरुद्रभट्टाचार्यः )
लक्षणावली ( उदयनाचार्यः )
लघुचन्द्रिका ( गौडब्रह्मानन्दः )
लीलावतीकण्ठाभरणम् (शङ्करमिश्रः)
लीलावतीप्रकाशः ( वर्द्धमानः )
वात्स्यायनभाष्यम् ( वात्स्यायनः )
वादिविनोदः ( शङ्करमिश्रः )
वाक्यपदीयम् ( भर्त्तृहरिः )
विद्यासागरी ( आनन्दपूर्णः )
वृक्षायुर्वेदः ( अज्ञातः )
बृहदारण्यकोपनिषद् (ईश्वरकर्त्तृका)
विष्णुपुराणम् ( महर्षिवेदव्यासः )
वेदान्तपरिभाषा (धर्मराजाध्वरीन्द्रः)
वेदान्तसारः ( सदानन्दयतिः )
वेदान्तकल्पतरुः ( अमलानन्दः )
वैशेषिकदर्शनम् ( महर्षिकणादः )
व्योमवतीवृत्तिः (व्योमशिवाचार्यः)
शतरत्नसंग्रहः (उमापतिशिवाचार्यः)
शक्तिवादः ( गदाधरभट्टाचार्यः)
शकुन्तला ( महाकविकालिदासः)
शब्दशक्तिप्रकाशिका ( जगदीशः )
शारीरकभाष्यम् ( शङ्कराचार्यः )
शास्त्रदीपिका ( पार्थसारथिमिश्रः )
श्वेताश्वतरोपनिषद् ( ईश्वरप्रोक्ता )
शाबरभाष्यम् ( शबरस्वामी )
श्लोकवार्त्तिकम् ( कुमारिलभट्टः )
सप्तपदार्थी ( शिवादित्यमिश्रः )
सर्वदर्शनसंग्रहः ( माधवाचार्यः)
सर्वदर्शनकौमुदी ( माधवसरस्वती )
सांख्यतत्त्वकौमुदी (वाचस्पतिमिश्रः)
सांख्यकारिका ( ईश्वरकृष्णः )
सेतुटीका ( पद्मनाभमिश्रः )